॥ श्रीः ॥

पच्चयप्पपाठशालायां संस्कृताध्यापकेन यज्वना

श्वेतारण्यनारायणशर्मणा विरचिते

# ॥ गद्यकाव्ये ॥




हरिश्चन्द्रचरितम् । कौशिकीचरितम् । [illegible]चरितम् ।

सुकुमारवर्मचरितम् । महामोह[illegible] [illegible]चरितम्

लोकोक्तिसंग्रहः । इत्येतैः सप्तभिः ग्रन्थैः समलंकृतः

पूर्वो भागः

---

चन्नपत्तने [illegible] मुद्रा[illegible] संमुद्रितः

विजयतेतराम्

॥ श्रीः ॥

# ॥ गद्यकाव्ये हरिश्चन्द्रचरितम् ॥

(*)

वन्दे सुन्दररूपं बृन्दारकबृन्दवन्दिताङ्घ्रियुगम् ।
वन्दारुवाञ्छितार्पणमन्दारं नन्दनन्दनन्देवम् ॥
सत्यन्दानन्तितिक्षाञ्च गुणेषु परमं विदुः ।
सत्यादिना हरिश्चन्द्रः परामुन्नतिमाभजत् ॥

अस्ति स्म हरिश्चन्द्रो नाम राजा। यस्त्रेतायुगे सूर्यवंशावतंसो बभूव । यः कोसलेष्वयोध्यामध्यावसत् । यन्धर्मैकतानमानसं राजसारसमतितरामुल्लसन्त्यदभ्रा शुभ्रा कीर्तिः कुलाङ्गनेव प्राणनाथमाश्रयत। येन धार्मिकेण परिपालितमखिलं वस्तु नैक्षत दुर्भिक्षं नापीड्यत व्याधिभिराधिभिश्च नाध्यगच्छन्मृतिञ्चाकालिकीम् । यस्मै धर्मायेव स्पृहयाञ्चाक्रिरे वपुषा वचसा मनसा च पौराः। यस्मादधिगतविनीतय इव प्रकृतयस्तपसा विद्यया वीर्येण वित्तेन च नामाद्यन् । यस्य लावण्यविनिर्जितरतिश्शैब्या नाम धर्मपत्नी पुलोमजेव मघोनः पुत्रो जयन्त इव रोहिताश्वो नाम । यस्मिन् शासितामिते शासति धरां धरापुरन्दरे दोषाकरश्शशधर एक एवाजनि सर्वेप्यजनिषत लोकबान्धवाः ।

स कदाचिन्नरपतिरारचयितुम्मृगयामरण्यानीमचरत् । तस्यां च कञ्चन मृगमन्वचरत् । तमनुधावन्नेकन्तपोवनमयात् । तत्र च "त्रायस्व त्रायस्व" इत्यसकृदुच्चारितमबलानामिव शब्दमशृणोत् । अनन्तरमनुद्रुतममुम्मृगं व्यसृजत् । शब्दमनुलक्ष्य धावन्निकषा समिद्धमग्निं भयार्तमाक्रोशदबलात्रयमपश्यत् । कौशिको महता तपसा विद्यात्रितयं साधयतीति नाजानीत । 'माभैष्ट माभैष्ट यूयमबलाः

पालयति महीम्मयि दुर्मेधाः कोऽयमन्याय्यां वृत्तिमाचरति युष्मासु' इत्यब्रवीच्च ।

तस्मिन्नवसरे रौद्ररूपस्सर्वारम्भाणां विघातकस्तदाक्रन्दितानुसारी विघ्नराजो व्यचिन्तयत् । 'अयं वीर्यवान्व्रती महर्षिर्विश्वामित्रस्तपोभिरुग्रैरुत्पत्तिस्थितिसंहृतिविधायिनीनां गुणत्रयमयीणां ब्रह्मविष्णुरुद्राणामप्यसाध्यानां विद्यानां त्रितयं साधयति । अनेन क्षमाशमदमसंयमादिमता महामुनिना होमादिभिर्दुष्करैस्साधनैरिमास्साध्यमानाः पावकसमीपमध्यासीना दिव्यनारीरूपास्तिस्रो विद्या भयार्ता विलपन्ति । शंभोरपि समाधिं विहतवतस्संप्रति शमादिप्रतिद्वंद्विनां कामादीनां सिद्धिविहतिसचिवानामभावादतिदुर्बलस्य मम सर्वाणि कर्माणि महातेजसि कौशिकेऽमुष्मिन् दैत्येन्द्रस्येव प्रह्लादे मोघीभवेयुरिति मन्ये । अथवा समागच्छन्तं मा भैष्टेति मुहुर्वदन्तमिमं महाप्रतापं राजर्षिं हरिश्चन्द्रमाविश्य त्वरितमभीप्सितं साधयिष्यामि' इति । इत्थं विचिन्त्य स रौद्रः परमो विघ्नस्तममलहृदयं राजानमाविशत् ।

तदाविष्टो भूपश्च कोपादेवं कौशिकमालपत् । 'अहो तापसलिङ्ग कस्त्वमनादृत्य मामादीप्तं बलेन तेजसा च भूपतिमापन्नशरण्यमुपस्थितं न्यायादपेतां वृत्तिमबलास्वाचरन्वस्त्रान्ते वह्निमाबध्नासि । मत्कार्मुकादुदित्वरैर्घस्मरैश्शरैर्विदलितसकलावयवो दीर्घनिद्रां प्रवेक्ष्यसि' इति ।

विश्वामित्रश्च तदाकर्ण्य नृपतेर्वचनं 'अयि दुरात्मन्वसिष्ठशिष्य हरिश्चन्द्र दुश्चरैस्तपोभिरधिगतब्राह्मण्यं त्रिशंकुयाजिनं सर्गान्तरप्रथमप्रजापतिं शुनश्शेपजीवातुं गाधिनन्दनन्तिस्रोविद्यास्साधयन्तमिममपि न विजानासि' इति सावलेपमालपन्नतितराममुष्मै भूपतये चुकोप ।

क्रुद्धे च तस्मिन्मुनिवरे रोषादिरहितेन संसाध्यास्तास्तिस्त्रो विद्याः क्षणेन तिरोदधिरे ।

राजापि तन्तपोनिधिं सम्यगालोक्य विश्वामित्रइति विज्ञाय भृशमबिभेत् । प्रवाताश्वत्थपत्रवदत्यर्थमवेपत । 'दुरात्मन् हरिश्चन्द्र तिष्ठतिष्ठ' इत्यात्मानमधिक्षिपन्तन्तत्रभवन्तं कुशिकसुतं साष्टांगपातमानमत् । सविनयमित्थमकथयच्च । 'भगवन्नयं भूपतेर्धर्मो यदापन्नपरित्राणं । तदपराधकणिकामप्यकृतवते "दातव्यं रक्षितव्यञ्च धर्मज्ञेन महीक्षिता । चापञ्चोद्यम्य योद्धव्यं धर्मशास्त्रानुसारतः ॥" इति विहितेषु दानरक्षणयुद्धादिषु निजधर्मेषु निरताय मह्यं न क्रोद्धुमर्हसि ' इति ।

विश्वामित्रोऽपि 'केभ्यो दातव्यं के पुनारक्ष्याः कैस्सह योद्धव्यं नृपते भवता यद्यधर्माद्बिभेषि तर्ह्येतदाख्याहि शीघ्रमेव मह्यं' इति तन्नृपमपृच्छत् ।

हरिश्चन्द्रोऽपि भूसुराग्रेसरेभ्यो दातव्यं येचान्ये कृशजीवनास्तेभ्यश्च देयं । भीतास्सदा रक्ष्याः । अरिभिस्समं युद्धं कर्तव्यं' इति तम्मुनिं प्रत्यवदत् ।

पुनरपि मुनिः 'राजन् यदि सम्यगात्मधर्ममनुतिष्ठासि ब्राह्मणोऽहं यष्टुमिच्छामि तदीप्सिता दक्षिणा मह्यं त्वया दीयतां' इति भूपमन्वयुङ्क्त ।

राजापि तन्मुनिवचनमाकर्ण्य प्रहृष्टान्तःकरणः पुनर्जातमिवात्मानममन्यत । महर्षिञ्च पुनरित्थमब्रूत । 'भगवन्यत्ते दातव्यं तदविशंकमुच्यतां । मत्तो यदीप्ससि "हिरण्यं वा सुवर्णं वा पुत्रं पत्नीं कलेबरं । प्राणान् राज्यं पुरं लक्ष्मीं यद्वाभिप्रेतमात्मनः" ॥ तद्वस्तु सुदुर्लभमपि तुभ्यम्मया दत्तमित्येव विद्धि' इति ।

तच्छ्रुत्वा मुनिरपि 'नृपते भवता यद्यन्मह्यमदायि मयापि

तत्तदादायीत्येव जानीष्व। प्रथमन्तावन्मह्यमचिरानुष्ठितराजसूयो भवान्वितरतु राजसूयिकीन्दक्षिणां' इति भूपतिमनुयुयुजे।

राजा च तदाकर्ण्य 'ब्राह्मणपुङ्गव भवते तामपि दक्षिणान्दास्यामि। यद्यद्वस्तु मदीयन्तवाभीप्सितन्तत्तद्यथेच्छं व्रियतां' इति मुनिमकथयत्।

तच्छ्रुत्वा मुनिरपि 'सार्वभौम यत्त्वदीयं सागरकान्तारसमेतं गिरिग्रामपत्तनालंकृतं गोष्ठागारकोशादिकरंबितं रथाश्वगजपत्तिसंकुलं सकलं राज्यं तद्वितरतु भवान्मह्य। यच्चान्यद्विद्यते। किं बहुना। सर्वधर्मज्ञ यो यान्तमनुगच्छति तन्धर्मं यदाद्यं धर्मसाधनं तच्च शरीरं या त्रिवर्गनिदानं तां भार्यामपि यः पुन्नाम्नो नरकात्त्राता तं पुत्रमपि विहाय सर्वमन्यत्प्रदीयतां' इति भूपतिमपृच्छत्।

भूपतिरपि तदृषिवचनमाकर्ण्य हृष्टमनाः कृताञ्जलिरविकारमुखः 'तथा' इत्यब्रवीत्।

विश्वामित्रः पुनरपि 'राजर्षे यदि भवता मह्यमखिलं राज्यं प्रतिपादितं तर्हि तापसे मयि राज्यस्थे प्रभुत्वं कस्य' इति हरिश्चन्द्रमप्राक्षीत्।

सोऽपि 'ब्रह्मर्षे यदा तुभ्यं व्यतारि मया वसुन्धरा तदैव भवानस्याः प्रभुः' इति मुनिं प्रत्यवादीत्।

सोऽपि 'यदि राजन्निखिला वसुधा भवता मह्यमर्पिता यतो मदीये राज्ये मम स्वाम्यमनर्गलं ततस्त्वमस्मादस्मद्विषयान्निष्क्रान्तुमर्हसि' इति नृपतिमवोचत्।

नृपोऽपि वज्रपातसदृशं तदृषिवाक्यमाकर्ण्य नाहमिदानीं कस्यापि प्रभुरस्मीति विचिन्तयन्मुहूर्तं निश्चेष्टतामगमत्। मुहूर्तात्पुनरधिगत्य संज्ञां ब्रह्मशापाद्भीतस्तम्मुनिमापृच्छच्य साकेतमारम्य भगवन्तमात्मगुरुं वसिष्ठञ्च द्वादशवार्षिकतपसे क्वाप्यगाधे गाङ्गे पयसि

निलीनमाकर्ण्य सर्वत्यागे मतिमतानीत् । तदनु समुत्सृज्य कटकमकुटादिकमाभरणजातं आबध्य तरुवल्कलं सह पत्न्या तनयेन च नगरान्निरगात् ।

निर्गत्य भार्यासुताभ्यां साकमाव्रजतस्तस्य महीपतेरध्वानं रुध्वा 'राजन्मह्यमदत्वा राजसूयिकीन्दक्षिणां क्व यास्यसि इति पुनरपि विश्वामित्रस्तन्निरबध्नात् ।

राजापि 'भगवन्नखिलमिदं निहतकण्टकं राज्यं तुभ्यमदीयत । इदमद्य देहत्रयमवशिष्यते ।' इति मुनिं प्रत्युवाच ।

मुनिरपीत्थं कथयामास 'राजन् देहत्रयावशेषेणापि भवता सावश्यं क्रतुदक्षिणा दातव्यैव । विशेषतो विप्राणां प्रतिश्रुतं वस्त्वप्रतिपादितश्चेत्तदिष्टापूर्तादि सुकृतमार्जितं हन्यादेव । राजसूये च यावद्ब्राह्मणानां सन्तोषो भवेत्तावत्तत्कर्त्रा सार्वभौमेन राजसूयिकी दक्षिणा देया । त्वयैव ''विप्रेभ्यो दातव्यं आततायिभिर्योद्धव्यं आर्तास्संरक्ष्याः'' इति प्राक्प्रतिश्रुतं । अप्रतिश्रुत्यापि दक्षिणीयेभ्यो दातव्यं किं पुनः प्रतिश्रुत्य' इति ।

तद्वचनन्निशम्य भूपतिरपि 'भगवन्निदानीं मयि किमपि नास्ति । कालक्रमेण तुभ्यन्तान्दक्षिणां दास्यामि । तन्मयि सद्भावमनुचिन्त्य प्रसादं कर्तुमर्हसि' इति मुनिं प्रार्थयामास ।

मुनिरपि 'महीपते किमवधिः कालः प्रतीक्ष्यो मया भवत्प्रदेयदक्षिणांयाः' । तं कालमतित्वरितमाचक्ष्व । शापाग्निरन्यथा मदुत्सृष्टस्त्वां प्रधक्ष्यति' इति राजानमाचख्यौ ।

राजापि 'महर्षे मयि सांप्रतमल्पमपि वित्तन्नास्ति । मासेन तदर्जयित्वा भवद्दक्षिणां प्रदास्यामि । भवदाज्ञामनुरुध्यमानस्त्वदीयराज्यान्निष्क्रम्य शूलपाणेः परिग्रहभूतां मनुप्रभूतिभिर्महीपतिभिरभुक्तां

वाराणसीन्नगरीमधिगत्य यं कञ्चनोपायमाश्रित्य दक्षिणान्दातुमर्जयितु-न्धनमनुमन्तुमर्हसि' इति मुनिं विज्ञापयामास ।

मुनिरपि 'नृपपुङ्गव गच्छगच्छ। परिपालय निजधर्मम्। शिव-स्तवाध्वास्तु । मा च सन्तु परिपन्थिनः ।' इति तमन्वजानात् ।

अनन्तरमाज्ञप्तो महर्षिणा वसुधाधिपतिर्विस्मयाविष्टमनाः प-द्भ्यामेव प्रतस्थे । कमलमृदुलचरणाभ्यामनुचितापि गन्तुं शैब्या सपुत्रा तमनुजगाम ।

अथ नगरान्निर्यान्तं सभार्यासुतमत्रभवन्तमवनीकान्तमवलोक्य सर्वे पौरास्तमनुसस्रुरित्थञ्चुक्रुशुश्च । 'हाहा नाथ धार्मिकधौरेय दीनानुकम्पिन् पृथ्वीचन्द्र हरिश्चन्द्र किञ्जहास्यार्तानस्मान् । राजर्षे शरण्य शरणागतत्राणमुत्तमधर्ममवेक्षसे चेत्तदिमानस्माननुयायिनोऽपि तत्र नयस्व यत्र जिगमिषसि। राजेन्द्र मुहूर्तन्तिष्ठ । भवद्वदनकमलन्न-यनचञ्चरीकैः पिबाम । कदा पुनस्तद्द्रक्ष्यामः । स्यन्दनमश्वं गजं वाधि-रुह्य प्रयातस्य यस्य पुरतः पृष्ठतश्च निरन्तराः पृथिवीश्वराः प्रयान्ति स्म तं पादाभ्यामकिञ्चनकल्पं प्रतिष्ठमानमेनञ्चक्रवर्तिनमियमसूर्यम्पश्या शैब्या कुमारसदृशं कुमारमिमं गृहीत्वानुयाति । हा राजन् राका-शशांकसुन्दरं निष्कलंकं तव मुखं पथि पांसुभीरूषितं कीदृशं भविष्य-ति । नृपतिवरिष्ठ तिष्ठतिष्ठ । अशरणानामस्माकं दयस्व । आश्रितेषु नृशंसो माभूः । आनृशंस्यं हि सत्यमिव परमधर्मः खलु विशेषतो भवादृशानां क्षत्रियाणां । नाथ भवता रहितानान्नः किन्दारैः किन्दा-रकैः किन्धनैः किन्धान्यैः किमन्यैर्वा वस्तुभिः परित्यज्य सर्वस्वं छायेव भवन्तमनुयामः। हा स्वामिन्ननुयातानस्मान्मा हासीः। हा हरि-श्चन्द्र यत्र त्वं स्थास्यसि तत्र वयं स्थास्यामः । तदेव नस्सुखास्पदमास्प-दं। सैव नगरी । किं बहुना सएव स्वर्गः' इति ।

अवनीपतिराकर्ण्य नागराणां वचनानि शोकव्याकुलमनास्तेषा-मुपरि नितान्तमनुकंपाभरेण मध्येमार्गं कञ्चित्कालमतिष्ठत् ।

विश्वामित्रोऽपि पौरवाक्यैराकुलीकृतं तमवलोक्य रोषावेशादुपगम्य 'सत्यसन्धमानिन् जिह्मभाषिन् दुष्टाचारं त्वान्धिक् । यस्त्वमखिलं राज्यं मह्यमर्पयित्वा पुनराक्रष्टुमिच्छसि' इति वचोऽब्रवीत् ।

इत्थमतिपरुषेण मुनेर्वाग्वज्रेण ताडितस्सवेपथुस्सराजा 'भगवन्द्रुततरं गच्छामि' इति ब्रुवन्नेव गृहीतसुतां दयितां करेण शीघ्रमाकर्षन् ययौ ।

तदा महर्षिभीतेन राज्ञा कृष्यमाणामपि द्रुतगतिमविजानतीं मन्दमन्दमाव्रजन्तीं सुकुमारांगीमध्वश्रमेण खिन्नां तां शैब्यां सहसा स कौशिको दण्डकाष्ठेन ताडयामास ।

तथा तेन ताडितां स्ववनितामालोक्य दुःखार्तोऽपि स राजर्षि 'भगवन् आशु यामि' इति वचनमुत्सृज्य नान्यत्किञ्चिदुदाजहार ।

तदानीं व्योमयानेन सञ्चरमाणाः परदुःखासहिष्णवः पञ्च विश्वे देवाः क्लिश्यमानं विश्वामित्रेण हरिश्चन्द्रमधो विलोक्य दयावशादित्थमूचिरे । पापीयानयं कौशिकः कान् लोकानाप्स्यति । येनायं यज्वनामग्रेसरो नृपवरः स्वराष्ट्रादवारोप्यत । अस्य नृपतेरिव कस्य वा महाध्वरे श्रद्धापूतं मन्त्रपुरस्सरमभिषुतं सोमं पीत्वा प्रमोदं लप्स्यामहे' इति ।

तेषां वचो निशम्य दण्डविघट्टितइवाशीविषस्सञ्जातरोषः कौशिकमहर्षिः 'भो विश्वे देवाः तपोनिधिम्मान्निन्दितवन्तो यूयम्मनुष्यत्वमवाप्स्यथ' इति तेभ्यः शेपे ।

अथ तैः प्रसादितस्समहामुनिः 'भवताम्मानुषत्वमाप्तवतामपि न भवित्री सन्ततिः । न भविता दारसंग्रहश्च । कामकोपादिहीनाः पुनरपि सुरत्वमचिरादेष्यथ' इति भूयस्ताननुजग्राह ।

ततः कालक्रमात्तएव देवाः कुरुगृहे स्वैरंशैरवतीर्य द्रौपदीगर्भसंभूताः पञ्चपाण्डवनन्दनाः प्रतिविन्ध्यादयो महावीरा भूत्वा शापवशादेव दाराननाप्त्वा सौप्तिके द्रौणिना निधनं प्रापिताः ।

तदनु राजर्षिर्हरिश्चन्द्रो निग्रहानुग्रहनिपुणाद्विश्वामित्रादतितरां भीतश्शनैरायान्त्या बालपुत्रया प्रेयस्यानुगतस्सञ्जातदुःखः स्वराज्यान्निष्क्रम्य 'शूलपाणिपरिगृहीता पुरीयमस्मत्पूर्वपुरुषैरस्माभिश्चाननुभूता' इति विचिन्त्य तां वाराणसीञ्जगाम। वाराणसीप्रवेशे च सविधमागतं गाधिसुतन्ददर्श। सविनयमवनतस्साञ्जलिश्च तम्महामुनिमुवाच च। महर्षे ममेदं शरीरं मदीयमिदमपत्यं मामकीनमिदं कलत्रं अमीषु येन ते कृत्यं भविष्यति तदविलंबितमुत्तममर्घ्यमिव गृहाण। यच्चान्यदस्माभिः कर्तव्यन्तदादेष्टुमर्हसि' इति।

मुनिरपि तद्वचो निशम्य 'राजन् योऽयमवधिर्दक्षिणादानस्य परिकल्पितस्त्वया सोऽद्य परिपूर्णः। कुतस्त्वया राजसूयिकी दक्षिणा न मह्यन्दीयते। किं प्रतिश्रुतं वचो विस्मरसि। उत सत्यं किं परिमार्ष्टुमिच्छसि' इति तं नृपं भर्त्सयामास।

नृपोऽपि 'तपोधन तव दक्षिणादानस्यावधिभूतो मासोऽस्मिन्नहनि पूर्तिं गमिष्यति। अवशिष्यते दिनार्धं। तदपि प्रतीक्षस्व मा कुप्य। इति तं मुनिं सान्त्वयामास।

तेन सान्त्वितस्समुनिः 'एवमस्तु राजन् पुनरहमागमिष्यामि। यदि दक्षिणामद्य न दास्यसि शप्स्ये तदा भवते' इति वाचमुदीर्य तञ्च भीषयित्वा यत्र कुत्रापि प्रययौ।

तदानीं राजा मनस्येवमचिन्तयत्। 'कथं महर्षये प्रतिश्रुतान्दक्षिणां प्रतिपादयेय। कुत्र पुष्टानि मित्राणि लभेय। केनोपायेन सांप्रतमर्थमर्जयेय। शास्त्रेष्वविहितं प्रतिग्रहं वा क्षत्रियः कथमहमाकलयेय। अकिञ्चनः कां वा दिशं प्रतिपद्येय। कं वा किं वा कथं वा याचेय। प्रतिश्रुतमप्रदाय यदि प्राणानुत्सृजेयं तदा ब्रह्मस्वहृदधमाधमः पापीयानहं कीटजन्म भजेयं। अथवा यस्य कस्यचित्प्रेष्यतामेष्यामि।

कलेबरं वा विक्रेष्ये। संप्रत्यन्तरेण शरीरविक्रयमन्यस्साधीयान्नास्त्युपायः प्रतिश्रुतं निर्वोढुं' इति ।

तथा चिन्ताव्याकुलमधोमुखमालोक्य प्राणनाथमत्यर्थपीडासन्तप्ता शैब्या बाष्पगद्गदाक्षरमित्थमूचे। 'नाथ चिन्तां सन्त्यज । सत्यं परिपालय। सत्यहीनो जनश्श्मशानवदतिदूरे वर्जनीयतामापद्यते । पुरुषस्य सत्यात्परतरं धर्मन्नहि ब्रह्मविदः प्रवदन्ति । सत्येनैव वातो वाति । सत्येनैव भानुर्दिवि रोचते। सत्येनैव नाधः पतन्ति दिविषदः।सत्यएव सन्तो रमन्ते। सत्यएव सर्वं संप्रतिष्ठितमास्ते। यस्य वचस्सत्थान्मुक्तं भवति तेन यथाशास्त्रमनुष्ठितमप्यग्निहोत्रादिकमतिपावनं श्रेष्ठतमं कर्म निष्फलीभवति । सम्यगधीताः निस्संशयमवबुद्धाः निरभिसान्धिकमाचरिताः निर्वञ्चनं प्रचारितास्सांगास्समस्ता वेदाअपि सत्यरहितं न पुनन्ति । यथामुख्यकल्पमनुष्ठितान्यपि महान्ति षोडश दानानि निस्सत्यन्न तारयन्ति । श्रुतिस्मृतिपुराणेतिहासादिषु विवेकिनां सत्यमेव संसारसागरतरणस्य परमन्निदानं अनृतमेवाविवेकिनामतिगभीरनरककूपपतनस्यात्यन्तनिमित्तमिति च समुद्घुष्यते। कृती नाम महान् पार्थिवः सप्त वाजिमेधान् राजसूयञ्च समनुष्ठाय त्रिविष्टपमवाप्यापि सकृदसत्यवचनाच्च्युतिमधिजगाम किल सुरलोकात् । राजन् भवतश्च जातमनुत्तममपत्यं' इति सावशेषं वचनमुदीर्य प्रकामं रुरोद ।

महीपतिना च बाष्पवारिपरिप्लुतनयना सा ददृशे जगदे च 'अयि भद्रे मा रुदिहि समाश्वसिहि विमुञ्च सन्तापं परित्यज सन्त्रासं बालकोऽयं चिरजीवी तिष्ठतु। करेणुगामिनि यद्वाक्यमाख्यातुकामासि तदनवशेषमाख्याहि' इति ।

राज्ञा चैवमापृष्टा शैब्या 'सार्वभौम सन्तस्सन्तानायैव गृहमेधिनो भवन्ति । सन्तानञ्च मत्तस्त्वमवाप्तवानासि । अतस्त्वमिमां विक्रीय वित्तमवाप्य विप्राय दक्षिणां प्रतिश्रुतां वितर' इति नरपतिं विज्ञापयामास ।

सोऽपि तस्या वचनमरुन्तुदमाकर्ण्य भृशम्मुमोह । बहोर्निमेषात्पुनः संज्ञां प्रतिपेदे। दुस्सहदुःखश्च 'अयि शोभने यन्मामवोचस्तन्मम महद्दुःखमावहति । भूतपूर्वास्तव सस्मितास्सल्लापाः किं पापेन मयाविस्मर्तुं शक्यन्ते । हाहा दुर्वचमेतद्वचः कथयितुं कथं वा भवदीया रसज्ञा प्रागल्भत ।' मादृशो वा कथमीदृशीं वाचमंगीकुर्यात्' इति विललाप । असकृदात्मानं 'एतादृशं मनुजपाशमिममधमाधमन्धिग्धिक्' इति निनिन्द । तत्क्षणमतितरां मूर्छितो महीपृष्ठे निपपात ।

पांसुषु पतितं गाढमूर्छमात्मनाथमालोक्य नितान्तशोका शैब्यां सकरुणमिदं बभाण ।' हा महाराज यदत्रभवतो भवतः कलेबरं रांकवास्तरणोचितमिदानीमवनीरेणुरूषितं तदिदं कस्य शापात्कस्माद्वा पापादुपागतं । येन भूसुरेभ्यः प्रभूतास्सुवर्णकोट्यः प्रतिपादिताः स एष मन्नाथस्सार्वभौमः क्षितितले बतस्वपिति । हा देव किमनेन महीभृता तुभ्यमपाराध्यत यत्वयायमिन्द्रोपेन्द्रसदृशः प्रस्वापनीन्दशामनीयत' इति । एवमुच्चैराक्रुश्य सापि दुस्सहेन महता भर्त्तृमूर्छावस्थादर्शनजेन शोकेन भृशपीडिता स्वयमपि सञ्जातमूर्छा भुवि पपात ।

शिशुरपि भूमौ निपतितौ मूर्छितौ पितरौ निशाम्यातिवेलं क्षुधाविष्टस्सुतरां दुःखितः प्राह वचनमिदं 'ताततात मह्यं ददस्वान्नं। मातर्मातर्देहि मे भोजनं। मम बलवती क्षुदुदजनि। मदीयं रसनाग्रं शुष्यति'इति।

एतस्मिन्नवसरे विश्वामित्रोऽपि संवर्तसमयसमवर्तीव रोषाविष्टः स्वन्धनं ग्रहीतुं तन्देशमाजगाम । मूर्छावशादवन्यान्निपतितं हरिश्चन्द्रमीक्षाञ्चक्रे । वारिणा तमभ्युक्षाञ्चकार । पुनरपीदमुदीरयामास । 'राजन्नुत्तिष्ठोत्तिष्ठ । प्रयच्छ तां राजसूयदक्षिणां । ऋणवतः पुंसः प्रवर्धते किल प्रतिदिनं दुःखेन सममृणमपि' इति ।

तदा स राजापि हिमशीतलेन तेन जलेन समभ्युक्षितश्चेतना मानशे । पुरतो मुनिमालुलोके । भूयोऽपि मूर्छामापेदे ।

अथ मुनिरपि तस्मै चुक्रोध । पूर्ववत्तं समाश्वास्य प्राप्तसंज्ञमिदञ्जगाद । 'नरपते यदि सत्यमुत्तमन्धर्ममवेक्षसे तर्हि सा दक्षिणा मह्यमविलंबितन्दीयतान्त्वया । "सत्येनार्कः प्रतपति सत्ये तिष्ठति मेदिनी । सत्यञ्चोक्तं परो धर्मः स्वर्गस्सत्ये प्रतिष्ठितः ॥ अश्वमेधसहस्त्रञ्च सत्यञ्च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥" इत्यादिकं श्रुतिस्मृत्यादिवचनजातं भूपते किन्न भवतः कर्णपथमविशत् । अथवा किमहमेतानि सामवचनान्यनार्ये दारुणे पापसंकल्पेऽनृतभाषिणि राजनि त्वयि वच्मि । तन्मदीयोऽयमाशयश्श्रूयतां । राजन्नद्य मे दक्षिणां यदि न दास्यसि । अस्तगिरिमर्के याते ततस्ते नूनं शप्स्ये ।' इति ।

इत्थमुदीर्य वचनं गतवति भगवति महामुनौ नृपतिरतितरां बिभाय ।

प्रतिबुद्धा तस्य भार्यापि ' नाथ मद्वचनमविशंकितमाचर । महर्षिशापवह्नौ पतंगतां मा स्म व्रजः' इति तं पुनः पुनरुवाच ।

एवं तया शैब्यया चोद्यमानस्स महीपतिरलंघनीयतया भवितव्यतायाः धीरतामवलंब्य दयितामुद्वीक्ष्य 'अयि महिते दयिते निर्घृणोऽहमिदानीमस्मि संवृत्तः यन्नृशंसैरपि दुष्करं जायाविक्रयपातकमारचयितुमुद्युञ्जे। धैर्यमाश्रितवतोऽपि मम वाणी दुर्वाक्यमिदमालपितुन्न प्रगल्भते । किं करिष्यामि । कं शरणं यास्यामि । कथं भार्यां विक्रेष्ये । कुतो धनं लप्स्ये। कदा महर्षये दक्षिणां ददिष्ये । कया विधया प्रतिश्रुतं निर्वक्ष्ये' इति बहुधा विलप्य भृशमातुरस्सभार्यातनयस्तन्नगरचत्वरमतिविततमयासीत् । अश्रुपिहितनयनश्चेत्थमवोचत् । 'भोभोस्सर्वे पौराश्शृणुत मामकं वचनं । राक्षसादप्यहमतिनृशंसः पापमिदमतिदुष्करं करोमि । दयितां विक्रेतुमिमां नगरीमापन्नोऽस्मि । अनया मम प्राणनायिकया किंकर्या युष्माकं यदि कस्यचित्कार्यं भवेत्सत्वरितं ब्रवीतु यावत्प्राणान् सन्धारयामि' इति ।

तदनु कश्चिद्वृद्धो ब्राह्मणस्समुपेत्य नराधिपं प्राह। 'भोस्समर्पय मह्यं किंकरीं तव वनितां। अहं क्रीणामि। धनमप्यनुगुणन्ददामि। मम तु वित्तमनल्पमस्ति। मम प्रिया सुकुमारांगी गृहकर्माणि कर्तुन्नप्रभवति। तत्तव भार्यायाः कर्मण्यतावयोरूपशीलानुरूपमिदन्धनं गृहाण मह्यमबलामर्पय।' इति।

इत्थन्तेन विप्रेणावेदितस्स भूपतिर्विदीर्णहृदय इव दुःखान्नैनं किञ्चिदुवाच।

ततस्स जरठभूसुरो भूपतेर्वल्कलान्ते धनं दृढं बबन्ध। अथ शैब्यां शिरोरुहेषु चकर्ष।

काकपक्षधरो बालो रोहिताश्वोऽपि विप्रेणाकृष्टाम्मातरमवलोक्य पङ्कजमृदुलेन पाणिना तस्या वस्त्राञ्चलमाकर्षन्रुरोद।

रुदन्तमर्भकं दृष्ट्वा शैब्या 'भगवन् कञ्चित्क्षणम्माम्मुञ्च। यावत्पश्यामि तमिमं बालकं यस्य पुनर्दर्शनमपि दुर्लभं भविष्यति' इति वृद्धमर्थयामास। 'वत्स मा रुदिहि। पितरमेव गच्छ। दास्यं गतामिमामवधारय। राजपुत्रस्य तवास्पृश्याम्मामधुना मा स्प्राक्षीः' इति पुत्रं सान्त्वयामास।

तया सान्त्वितोऽपि स बालकस्सहसा समाकृष्टाम्मातरं समीक्ष्य 'अंब' इति वदन्साश्रुनयनः पदेपदे स्खलन्करेण तद्वस्त्रमाकर्षन्पुनरपि तामन्वधावत्।

मातरमनुगच्छन्तं बालकं द्विजोऽपि कोपात्पदा समताडयत्।

तेन ताडितोपि स शिशुरसकृत् 'अम्ब' इत्युच्चैरुदीरयन् जननीन्नाजहात्।

आत्मानममुञ्चन्तमात्मजमालोक्य दयार्द्रचित्ता राजपत्नी 'स्वामिन् प्रसीद। इममपि बालकं क्रीणीष्व। क्रीताप्यहमिमं विना

भवतः कार्याणि न साध्नुयां । अल्पभाग्यामपि मान्दयावशादनेन बालकेन पयस्विनीं वत्सेनेव संयोजय' इति ब्राह्मणं पुनरपि प्रार्थयत ।

तस्याः प्रार्थनया प्रसन्नो विप्रः क्षितिपतिमेत्य 'भो भद्र अयं बालकोऽपि मह्यन्दीयतां । मूल्यमपि मत्सकाशादादीयतां । स्त्रीपुंसयोर्मूल्यं धर्मशास्त्रवेदिभिश्शतं सहस्रं लक्षमुत कोटिस्सुवर्णानीति बहुधा समुदीरितं । तदिदमस्य बालस्यानुगुणं मूल्यं' इति राजनि निवेद्य तदपि वित्तं पूर्ववदेव तस्य नृपतेरुत्तरीयवल्कलान्ते सुदृढमबध्नात् । तदनु तौ शैब्यारोहिताश्वौ स्वभवनं नेष्यमाणः प्रातिष्ठत ।

पार्थिवोऽपि विप्रेण नीयमानौ भार्यापुत्रावैक्षत । सुतरान्दुःसहदुःखश्च दीर्घमुष्णञ्च मुहुर्मुहुर्निश्वस्य व्यलपत् 'पुरा यान्नवायुः परपर्श न सूर्याचन्द्रमसावपि ददृशतुः सेयं मम पत्नी बतास्य दास्यमगमत् । सूर्यवंशसमुद्भूतस्सुकुमारकरचरणस्सोऽयम्मम तनयोऽप्यहो व्यक्रायि । धिग्धिङ्मां निर्लज्जं पापकृतन्दुर्मतिं । हाहा प्रिये हाहा वत्स नितरामनार्यस्य मम दुर्नीतिभिरेतादृशीन्दशामुपगम्य कथं वर्तिष्येथे' इति ।

एवं विलपतस्तस्य राज्ञस्स भूसुरस्तावादाय त्वरया गच्छन्नुत्तुङ्गैस्तरुभवनादिभिरन्तर्धिमाप ।

तत्क्षणं विश्वामित्रोऽपि नृपमुपगम्य वित्तं ययाचे ।

हरिश्चन्द्रोऽपि तस्मै तद्धनमखिलन्ददे ।

कौशिकोऽपि दारदारकविक्रयसंभवं तद्वित्तमल्पम्मत्वा कुपितश्शोकाभिभूतं भूभृतमगदत् 'क्षत्रबन्धो त्वमत्यल्पमिदन्धनं मम योग्यां यज्ञदक्षिणां यदि मन्यसे तर्हि क्षिप्रमुदीक्षस्व मम सुतप्तस्य तपसः तपस्समासादितस्यामलस्य ब्राह्मण्यस्य चकितत्रिविष्टपस्य महतः प्रभावस्य शुद्धस्याध्ययनस्य च परमं बलं' इति ।

हरिश्चन्द्रोऽपि 'भगवन् अन्यामपि दक्षिणान्दास्यामि । काश्चि-

त्कालं प्रतीक्षस्व । भार्यापुत्रावपि विक्रीतौ । सांप्रतमहमेक एवावशिष्टोऽस्मि । मा कुप्य मह्यं' इति मुनिमसान्त्वयत् ।

मुनिरपि 'नराधिप योऽयन्दिवसस्य चतुर्थोभागश्चलति तं केवलं प्रतीक्षिष्ये । त्वयापि किमपि नोत्तरं न वक्तव्यं । दक्षिणापि पूर्णाऽवश्यन्दातव्या' इति राजानं निर्घृणं निष्ठुरञ्च वचनमावेद्य तद्धनमादाय तूर्णं ययौ ।

महिते मुनौ कुपिते गते भीतभीतश्शोकसागरनिमग्नस्स नृपतिरात्मानमपि विक्रीय प्रतिश्रुतं पूरयिष्यामीति विनिश्चित्य मनस्यधोमुखस्सन्नुच्चैरुवाच 'अर्थी यः पुमान् धनक्रीतेन प्रेष्येण मया भवेदर्थी स तावदर्कस्यास्तशिखरप्रवेशादर्वागेव ब्रूयात्' इति ।

तदनु देवस्सकलस्य धाता धर्मस्त्वरितमतिविकृतं दुर्गन्धकरंबितमतिस्थूलं श्मश्रुलं श्यामलं दन्तुरं लंबोदरमसितांबरमतिभयंकरञ्च धृत्वा चण्डालरूपं उत्सृष्टघृणः उदीरितपरुषाक्षरः गृहीतशकुन्तिकुलः समलंकृतशवमालः कपालयष्टिहस्तः श्वगणपरिवृतः काममतिभैरवाकृतिश्च भूत्वा तन्देशमाजगाम । भोस्त्वयाहमर्थी भवामि द्रुतमात्ममूल्यमाचक्ष्व स्तोकमस्तोकं वा वित्तमिच्छानुसारादापृच्छस्व तदवश्यमीशे दातुं' इति नृपतिमाचचक्षे ।

नृपतिरपि तं क्रूरदृष्टिमतिनिष्ठुरमतिदुःशीलं वदन्तमालक्ष्य 'कस्त्वं' इत्यप्राक्षीत् ।

चण्डालोऽपि 'अहमस्मिन् पुरोत्तमे प्रवीर इति विख्यातः वध्यघातकः मृतकर्पटहारकश्चण्डालः' इति प्रत्यवोचत् ।

नृपोऽपि 'नाहमतिगर्हितञ्चण्डालदासत्वमिच्छेयम् । वरं शापदहनदाहः न वरञ्चण्डालकिंकरता' इत्याचष्ट ।

तस्मिन्नेवं ब्रुवति विश्वामित्रोऽपि कोपविवृत्तनेत्रस्तन्देशमाययौ । नराधिपञ्चेत्थमाचख्यौ 'महीपते तुभ्यमयञ्चण्डालः पुष्कलं वसु वितरीतुमुपस्थितः । कुतो मह्यमशेषा क्रतुदक्षिणा न वितीर्यते' इति ।

राजापि 'भगवन् कौशिक सूर्यवंशसम्भूतः कथमहं वित्त-काम्यया चण्डालदास्यं यास्मामि' इत्यकथयत् ।

मुनिरपि समन्युः 'महीपते निर्दिष्टं कालमनतिलङ्घ्य चण्डाले त्वमात्मानं विक्रीय ततस्समासादितं धनं नचेन्मह्यमर्पयिष्यसि तर्ह्यसंशयं भवते शप्स्ये' इति वक्ति स्म ।

तद्वचनमाकर्ण्य चिन्तातरलमतिः क्षितिपतिरतीव विह्वलस्तस्य चरणकमलद्वयं गृह्णन् 'भगवन् प्रसीद दासोऽस्मि विशेषतस्त्वद्भक्तोऽस्मि कथं कष्टं चण्डालसाङ्कर्यं गच्छेयम् । वित्तशेषेण तत्रभवतस्तवैव सर्वकर्मकरश्चित्तानुवर्ती वश्यः प्रेष्यो भवेयं' इति मुनिवरमनेकवारं प्रार्थयामास ।

मुनिवरोऽपि 'राजन् यन्मम दासतामध्यगच्छः ततो मया चण्डालाय वित्तार्बुदेन त्वमदीयथाः' इति कठोराङ्गिरमुदीरयामास ।

एवम्मुनिवरेण तादृशि वचसि प्रोक्तमात्रएव स श्वपाको हृष्टचित्तो भूत्वा विश्वामित्राय तद्द्रव्यमर्पयित्वा प्राप्तप्रेष्यभावं सम्भ्रान्तं अतीव व्याकुलेन्द्रियं इष्टबन्धुजनवियोगपीडितं हरिश्चन्द्रं बध्वा दण्डेन ताडयित्वा निजपक्कणं गमयामास ।

ततो विनष्टसर्वस्वश्चण्डालपक्कणमधिवसन् हरिश्चन्द्रो दारान् दारकञ्च स्मरन् प्रातर्मध्यन्दिने सायञ्च 'असुखापन्ना दीनानना शैब्या बालकमग्रतो दीनवदनमवलोक्य "अचिरादार्जितवित्तो नृपतिरवनीसुराय ततोऽधिकं वितीर्य धनमावाम्मोचयिष्यति" इति मन्येत । पापिष्ठमेतादृशं चण्डालदासत्वमापन्नमापन्नं न बुध्येत । प्रथमं राज्यनाशस्ततस्सुहृत्त्यागस्तदनु दयितासुतविक्रयस्तदनन्तरमियं पुल्कसदासता चेत्यहो ममेयमतिघोरा दुःखपरम्परा' इति विलपन् कञ्चन कालमतिवाहयामास ।

कस्मिंश्चन समतिक्रान्ते समये चण्डालवशगस्स भूपतिः मृतचेलहारिणा प्रवीरेणानुशिष्टश्श्मशाने मृतचेलापहारको बभूव ।

पुनरपि स्वामिना 'इह पितृवने मृतागमनमन्विच्छन्दिवानिशं तिष्ठ। द्वादशधा विभज्य शवमूल्यं राज्ञे षड्भागान्वितर मह्यञ्चतुरो भागान्ददस्व त्वमपि द्वौ भागौ वेतनं गृहाण' इति समादिष्टस्स हरिश्चन्द्रो वाराणस्यान्दक्षिणान्दिशमास्थितं महत्पितृवनञ्जगाम ।

यदत्यन्तमाशिवशुनकशिवासहस्त्रघोरतररवभयङ्करं शवशिरोनिकरैरतिदन्तुरं कङ्कालमेदुरं दुर्गन्धधूमप्रचुरम् ।

यदध्यासते भूतवेतालशाकिनीडाकिनीप्रमुखाः प्रभूतकोलाहलाः पिशाचाः कङ्ककाकप्रायाश्शकुनयश्च ।

यत्रानिशं 'हाहा पितः मातः भ्रातः दुहितः हाहा पुत्र पौत्र दौहित्र हा भगिनि भागिनेय हा मातुल मातामह हा पते हा दयिते हा मित्र हा बन्धो क्व गच्छसि मदन्तिकमेहि मामालप मह्यमितिकर्तव्यतामुपदिश मां रक्ष मामलिङ्ग त्वां विना मम श्रवणयोः कः पुनर्मधुरवचनामृतान्यासिञ्चेत्' इत्यादिर्महान् गद्गदवचननिकरश्श्रूयते ।

यत्रार्धदग्धा विकसद्दशनाश्शवनिकराः कायस्येदृशी दशेति हसन्तीव ।

यत्र। क्वचिदग्नेश्चटचटाशब्दः। क्वचन वयसां विरावः । कुत्रचिद्बान्धवाक्रन्दध्वनिः । कुत्रचन शवोपहारादिग्रहणलालसानां पुल्कसानां प्रहर्षजः कलकलः। अन्यत्र गायतामत्युद्धतं नृत्यताञ्च भूतवेतालादीनां महाघोरारवश्च निशम्यते ।

तत्र प्रतिभये पितृवने निवसन् सराजा भृशमात्मानमनुशोचन् 'हा हतविधे तव महिम्ना ते भृत्यास्ते सचिवास्ते विप्राश्च कुत्र याताः। किं बहुना। तद्राज्यञ्च क्व गतम्। हा प्रिये शैब्ये हा बाल रोहिताश्व मन्दभाग्यमिमं विमुच्य विश्वामित्रकोपात्कुत्रापि दुस्सहं क्लेशमनुभवथः' इति पदेपदे विलपन् प्रवीरशासनमतन्द्रमनुतिष्ठन् मलिन रूक्षसदुर्गन्धाखिलाङ्गो लगुडवान् स्वाधिकारप्रदर्शकध्वजवान् कालकल्प

स्तत्र तत्र धावन् इदमस्मिन् शवे मूल्यमधिगतं इदमत्राधिगच्छामि एतदमुष्मिन्नधिगमिष्यामि' इति वदन् 'इदं राज्ञे इदं स्वामिने इदं मह्यं' इति तन्मूल्यं विभजन् जीवन्नेव जननान्तरमिव विशन् जीर्णं कर्पटं वसानः कीर्णञ्चिताभस्म मुखबाहूदराङ्घ्रिणि दधानः दीर्घमुष्णञ्चोच्छ्वासन्तन्वानः यदृच्छयाधिगतान् शवौदनान् भुञ्जानः विविधवसामज्जामेदोविलेपेन साङ्गराग इव शवमाल्यसंश्लेषेण कलितकुसुममण्डन इव न रात्रौ नाप्यहनि सुष्वाप। केवलं हाहेति मुहुर्मुहुः प्रललाप। एवन्तत्र निवसता महीभृता द्वादश मासाश्शरच्छतसदृशा निन्यिरे।

अथ कदाचित्स नृपतिर्दुष्करप्रवीरनियोगाद्दुस्सहबन्धुवियोगाच्च नितरां श्रान्तः निद्रया परिभूतस्तत्रैव पितृवने कुत्रचिद्भूपृष्ठे शिश्ये।

प्राक्तनजन्मनि गुरवे प्रदेयायाः गुरुदक्षिणायाः अप्रतिपादनेन द्वादश वर्षाणि तावदुपदेशादिषु गुरोः केवलमायासदुःखप्रतिपादनेन च सञ्जातस्य दुरितस्य निरयानुभवरूपनिष्कृतेः स्वाप्निकविधयाप्यधिगन्तव्यतावश्यकतया स कञ्चनाद्भुततमं स्वप्नमेवमनुबभूव।

तथाहि—स तत्र स्वप्ने स्वमात्मानं चण्डालीगर्भमापन्नं ददर्श।

तस्मिन् पुल्कसीगर्भे स्थितोऽपि स नरपतिः 'इतो निष्क्रान्तमात्रोऽहमाचरिष्यामि दानधर्मादिकं' इति चिन्तयामास।

अनन्तरं स जातः पुल्कसबालकः क्रमेण वृद्धिं प्राप्य सप्तमवर्षएव श्मशाने मृतमूल्यहारको बभूव।

तदानीं कश्चिदधनस्संप्राप्तनिधनो ब्राह्मणः संस्काराय बन्धुभिर्विप्रैश्श्मशानमानिन्ये।

मूल्यार्थिना तेन पुल्कसबालकेन मृतमूल्यमर्थिताः निर्धनतया तन्मूल्यन्दातुमक्षमास्तेन परुषवचनैरधिक्षिप्तास्ते विप्रास्तस्मै भृशं चुकुपुः।

'पुरा ब्रह्मर्षेर्विश्वामित्रस्य केनाप्यपदेशेन कलितावमाननो हरिश्चन्द्रस्तेन पुल्कसतान्नीतः' इति विश्वामित्रचेष्टितमूचिरे ।

'पापिष्ठ जुगुप्सितमस्मदधिक्षेपं कुर्वन् त्वमधुनैव घोरं नरकं प्रविश' इति तस्मै शेपिरे ।

तैरेवमुक्तमात्रएव वचसि स्वप्नावस्थापन्नस्स नृपः पाशकरान् भयंकरान् यमकिंकरानपश्यत् ।

ततस्तैस्संगृहीतं सप्तवर्षपुल्कसकायाद्बलान्नीयमानमात्मानमालोक्य भृशं खिन्नो 'हा मातर्हा पितः' इति व्यलपत् ।

तदनु यमकिंकरैर्निरयमनीयत । तत्र च कञ्चित्कालं तप्ततैलद्रोण्यामपात्यत । निशिताभिः क्रकचधाराभिरपाट्यत । अन्धे तमस्यक्षिप्यत । कञ्चन समयं क्वचिदपच्यत क्वचिददह्यत कुत्रचिदखेद्यत कुत्रचिदक्षोभ्यत कञ्चित्क्षणमन्यत्रामार्यत अन्यत्राक्षार्यत ।

इत्थमतिदुस्सहं नारकक्कृच्छ्रमनुभवतस्तस्य दिनमेकमपि वर्षशतकल्पमभवत् ।

एवं शतं वर्षाणि नरकयातनामनुभूय ततस्तैर्भूमौ निपातितः क्रमेण कुक्कुरखरकरिवानराणां अजमार्जारकंकगवाविकीटानां मत्स्यकूर्मवराहकुक्कुटशुकशारिकासर्पाणां अन्येषाञ्च देहिनां नानायोनिषु प्राप्य जन्मानि तत्र चानुभूय कष्टानि परिपूर्णे वर्षशते कदाचिन्निजकुलसंभूतं हरिश्चन्द्ररूपमात्मानमपश्यत् ।

अथ तत्र स्थितस्य तस्याखिलं राज्यमनुत्तमं कलत्रमतिवरिष्ठञ्चापत्यमक्षदेविभिर्देवनेनापजह्रिरे । सचैकाकी वनमियाय । तत्र च व्यात्ताननं बिभक्षयिषुमायान्तं पञ्चाननमालुलोके । तेन गृहीतस्सः 'हा शैब्ये संप्रति दुःखिनमिह मामपास्य क्व गतासि' इति दयितामनुशोचन् भक्षयांबभूवे । पुनरपि स्वर्गस्थितस्सराजा मुक्तकेशीमनाथां विवसनां बलान्नीयमानां 'हानाथ मान्त्रायस्व' इत्य

सकृद्वाचमुच्चरन्तीं भार्यामपश्यत् । भूयोऽपि विश्वामित्रेण विज्ञापितस्य धर्मराजस्य शासनात्तद्दूतैस्सनृपतिस्सर्पपाशैर्बध्वा गगनस्थितमाक्रन्दनरकमनीयत । तत्रापि विश्वामित्रप्रेरणया महान्तं क्लेशमनुभवतस्तस्याणुरप्यधर्मोत्था विकृतिर्नाजायत । एवं द्वादश वर्षाणि तत्र कृच्छ्रमनुभूय पुनश्च भटैर्नीयमानस्स यमान्तिकञ्जगाम ।

यमोऽपि तन्नरपतिमुदीक्ष्य 'भो राजन्नयं महात्मनो विश्वामित्रस्य महर्षेरनिवार्यः कोपः यत्त्वमेवमेतानि कष्टान्यनुभवसि । स कौशिकस्तव पुत्रस्य मृतिमपि दर्शयिष्यति । तद्गच्छ मानुषलोकम् । दुःखशेषञ्च भुङ्क्ष्व । तत्र गतस्य तव व्यतीते द्वादशे वर्षे दुःखान्ते श्रेयो भविष्यति' इति प्रोवाच ।

अनन्तरं यमलोकाद्यमदूतैर्मर्त्यलोके पातितस्सराजा स्वप्नाद्बुबुधे । भयञ्चानशे । ' अहो कष्टमिदं क्षते. क्षारावसेचनं । यत्स्वप्ने यावद्द्वादशवर्षाणि महदनन्तन्दुःखन्दृष्टं' इति मनसि विचिन्त्य चकंपे । स्वाप्निकं प्रत्यक्षवदाभासमानं द्वादशवर्षातिलंघनं वितथमवितथं वेति स्वयं सन्दिह्य सहचरान् पुल्कसान् ' भोः अत्रागतस्य मम द्वादश वर्षाणि किन्नु गतानि ' इति पप्रच्छ ।

तेषु केचिन्नेत्यूचुः । अपरे द्वादश समा गता इति जगदुः ।

तेषां वचनमाकर्ण्य स्वप्नवृत्तञ्च संस्मृत्य दुःखितो नितान्तमसौ भूपतिर्गीर्वाणान् शरणमुपेयिवान् ।

' सर्वे देवा मह्यं शैब्यायै बालकाय च स्वस्ति कुर्वन्तु । नमो देवेभ्यः नमो देवाधिपतये नमो बृहस्पतये । नमो महते धर्माय । नमः परमेष्ठिने । नमः पिनाकिने । नमो विष्णवे नमः पुराणायाव्ययाय शुद्धाय परमात्मने ' इत्युदीर्य यथापूर्वं पुल्कसकर्मणि युक्तः शवमूल्यसङ्ग्रहणे समुद्युक्तः तन्द्राया विनिर्मुक्तस्सभूपतिर्लगुडी ध्वजी च पितृवनभुवि विचचार । नैव भार्यापुत्रावपि सस्मार ।

अनन्तरमस्य नरेन्द्रस्य दयिता शैब्या सर्पदष्टं गतासुं सूनुमादाय 'हा पुत्र हा वत्स' इति सविलापं रुदती, पांसुरूषितालका कृशा विवर्णा च तत्पितृवनमाययौ । 'हा राजन्नाथ बालकमिममाकलितपांसुक्रीडं पुरा दृष्ट्वा दुष्टाहिना दष्टम्मृतमद्य न पश्यसि' इति विललाप ।

स नराधिपोऽपि तस्यास्तादृशं विलापशब्दं शुश्राव । 'मृतकम्बलं ग्रहीष्यामि' इति मत्वा त्वरिततरन्तत्र जगाम । अतितरां रुदतीं चिरविश्लेषकृशां पुनर्जातामिव तां शैब्यां भार्येति न प्रत्यभिजज्ञौ ।

सा नृपसुतापि तन्नृपं चारुकेशान्तं पुरा विलोक्य सम्प्रति जटालं शुष्कवृक्षसदृक्षं भर्तेति न बुबुधे ।

स नरेश्वरोऽपि तमाशीविषपीडितं बालमालोक्य मनस्येव मचिन्तयत् । 'अहो शिशोरस्य शरीरे चक्रवर्तिलक्षणाणि स्पष्टमुद्भासन्ते । तथाहि—नीरदश्यामाश्शिरोरुहास्समायताः कुञ्चितास्तरङ्गिताश्च भान्ति । अलिकमतिविशालमष्टमीशशाङ्कसादृश्यमावहति । ऊर्ध्वे भ्रुवौ शरासनोपमे । नेत्रयुगलमम्बुजदलोपमम् । कपोलावतिविमलौ रत्नमुकुरसमानौ । तुङ्गा नासिका । चारवो दन्ताः । बिम्बतुल्यावोष्ठपुटौ । आस्यमतिसुन्दरम् । कंबुतुल्यः कण्ठः । विशालं वक्षः । त्रिवलिभासुरमुदरं । दीर्घौ बाहू । यवसदृशाङ्गुलिपर्वा चतुर्लेख कान्तः करः । सिरालावंबुजकोमलौ पादौ । सूक्ष्मा च त्वक् । कष्टं कष्टमयं कस्यापि नरेन्द्रस्य कुलमण्डनं शिशुर्दुरात्मना कृतान्तेनैतादृशीमवस्थामनीयत । मातुरुत्संगशायिनमेनं बालमालोक्य राजीवलोचनो बालो रोहिताश्वः स्मृतिपथम्मे समुपगतः । सोऽपि मम वत्सः वयोवस्थामीदृशीमेव भवेदधिगतः । स एव किमनीयत दारुणेन कृतान्तेनात्मनो वशं' इति ।

इत्थं चिन्तयति तस्मिन् महीभृति सापि राजपत्नी हाहा वत्स कस्य पापस्यापध्यानादिदम्महदनन्तं दारुणन्दुःखमापतितं । हा

नाथ राजन् दुःखिताम्मामनाश्वास्य क्वापि भवता विस्त्रब्धं स्थीयते तत्किं सांप्रतं सांप्रतं । हा दुर्विधे राजर्षेर्हरिश्चन्द्रस्य राज्यनाशं सुहृत्त्यागं भार्यापुत्रविक्रयञ्च कृतवता किं कृतं भवता' इत्युच्चैश्चक्रन्द।

नृपोऽपि तदाक्रान्दितमाकर्ण्य तां दयितां निधनं गतन्तञ्च पुत्रं प्रत्यभिज्ञाय 'कष्टमियं सैव मम पत्नी बालकोऽप्ययं स एव मम तनयः' इति प्रलपन् रुदन् मुमूर्छ ।

सापि तादृशीमवस्थामापन्नन्तं भर्तारं विज्ञाय नितान्तमार्ता मूर्छिता निश्चेष्टा च धरणीतले पपात ।

राज्ञी राजा च तौ युगपच्चेतनामवापतुः। शोकाग्निज्वालया सुतरामभितप्तौ बहु विलेपतुः ।

राजा 'हा वत्स तव सुकुमारनयननासिकालकमाननं पश्यतो मम दीनमिदं हृदयं किन्न विदीर्यते । तात तातेति मधुरां गिरमुच्चार्य स्वयमायान्तं भवन्तमतिसौहार्दादाश्लिष्य वत्स वत्सेति कदा वक्ष्ये । कस्य जानुभ्यामानीतैः पांसुभिर्मदीयमङ्गम्मलिनीभूयापि धन्यं भविष्यति। अङ्गप्रत्यंगसमुद्भूत मनोनयननन्दन कुमार मया न पितृमानासि येन वत्सवद्विक्रीतस्त्वमभवः । अहो नृशंसो दैवाहिर्मम राज्यमशेषं हृत्वाप्यतृप्तस्तनयमपि मदीयमदशत् । अहिदष्टस्य तनूजस्य मुखकमलमीक्षमाणोऽप्यहमधुना घोरेण विषेणान्धीकृत इव भवामि' इति बहु विलप्य बाष्पासारपिहितकण्ठस्तनयमादाय दृढमालिङ्गच निश्चेष्टो मूर्छया भुवि निपपात ।

राज्ञी च 'अयं स पुरुषव्याघ्रो विद्वज्जनमानसकैरवचन्द्रो हरिश्चन्द्र इति स्वरमात्रेण लक्ष्यते । इयमुत्तुंगाऽधोमुखाग्रा नासिका च । इमे कुन्दकुड्मलप्रख्या दन्ताश्च प्रख्यातकीर्तेस्तस्य महात्मनो राजर्षेरेवासंशयं । किन्निमित्तमेष नरेश्वरः पितृवनमध्यास्ते' इति बहुवारमाक्रन्द्य पुत्रशोकमपि विसृज्य पतितं पतिमपश्यत् । भर्तुस-

विधे च स्थितं जुगुप्सितं श्वपचार्हं लगुडमुदीक्ष्य भूयोऽपि मोहमापद्य तदनु शनैस्संज्ञामवाप्य सगद्गदं हा हतविधे निष्करुणं निर्मर्यादं त्वां धिक् । येनायममरेन्द्रतुल्यो महाराजश्चण्डालतां प्रापितः। हा महाराज प्राणनाथ सन्तप्तामित्थं भूमौ निपतितां मां कुतो धरणीतलान्नोत्थापयसि। राजन्नद्य तव च्छत्रचामरव्यजनादीनि राजलक्षणानि न पश्यामि । कोऽयं विधिविपर्ययः । यस्य व्रजतः पूर्वं भृत्यतामापन्नाः राजानः स्वैरुत्तरीयैर्महीतलं नीरजस्कमकुर्वत सोयं सार्वभौमः कपालनिरन्तरे मृतनिर्माल्यमेदुरे चिताधूमस्तोमनीलीकृतदिगन्तरे भस्मांगारास्थिभीषणे गृद्ध्रगोमायुनादातिदारुणे कुणपास्वादनसंहृष्टनिशाचरगणे भृशमपवित्रे श्मशाने चरति' इत्युदीर्य नाथमधिगतसंज्ञमधिकण्ठमाश्लिष्य सकरुणमिदं बभाण 'राजन् किमयं स्वप्नः किमिदं तथ्यं यत्त्वमेवन्दृश्यसे । मानसमिदम्मम मुह्यति । तत्कथय वृत्तान्तमात्मनीनम् । धार्मिकपुङ्गव भवतोऽप्येवं स्थितिरुत्पद्येत चेत् तर्हि धर्मस्य सहायतां कः प्रतिपद्येत । विप्राणां पूजनं देवानां यजनं अन्यच्च सत्कार्यं कः श्रद्दध्यात् विदध्याच्च । यत्त्वं धर्मपरमः स्वराज्यभ्रंशादिकमध्यगच्छस्ततः प्रथमः पुरुषार्थेषु धर्मो नास्त्येव । कुतस्सत्यमार्जवमानृशंस्यञ्चेति मन्ये' इति ।

इत्थं तन्वङ्ग्यास्तस्या वचो निशम्य नृपतिरपि दीर्घमुष्णञ्च निश्वस्य सगद्गदमात्मनश्चण्डालताधिगमं यथावत्कथयामास ।

सापि तद्वृत्तमाकर्ण्य सुचिरं रुदित्वा निजतनयनिधनं यथा वृत्तं निवेदयामास ।

राजापि तद्वाक्यं निशम्य महीतले निपपात । सकरुणं विललाप । उच्चैस्तरां रुरोद । पांसुषु विलुलोठ । पुनरुत्थाय मृतस्य सुतस्य मुखं जिह्वया लिलेह । दयितामुदीक्ष्य पुनरिदं उवाच । 'प्रिये दीर्घकालमिमं क्लेशमनुभवितुं न पारये । तन्वि नात्मापि मम्रायत्तो

वर्तते । पश्य मे विधिपरिपाकं । यदि चण्डालशासनमन्तरेण ज्वलनं प्रवेक्ष्यामि तदा जन्मान्तरेपि चण्डालदासतां प्राप्स्यामि क्रिमिभोजी कीटको निरये निपतिष्यामि असृग्वसापूयस्नायुकरंबितायां वैतरण्यां मंक्ष्यामि । दारुणमसिपत्रवनमधिवत्स्यामि । रौरवमहारौरवयोर्दुस्सहं सन्तापं यास्यामि । अथवा पुत्रदुःखाद्वरं नरकदुःखं । ततस्सोऽहं सुतशरीरेण सह दीप्यमाने वह्नौ पतिष्यामि । दयिते यदा कदा वा मया कृतो मन्तुस्त्वया मर्षणीयः । साध्वि मयानुज्ञाता त्वरितमवनीसुरसदनमभिगच्छ । प्राणनायिके मद्वाक्यमवहितमानसा त्वमवबोध । इज्याध्ययनदानानि यदि मया विना दंभमाकलितानि गुरवो यदि मया यथाकामं सन्तोषिताः तदा लोकान्तरेऽपि पुत्रेण त्वया च मम संगो भूयात् । इह लोके कथमेतदीप्सितं भविष्यति । भार्ये स द्विजोऽपि त्वया राजपत्नीति गर्वेण नावज्ञेयः सर्वैरपि प्रयत्नैः स सन्तोष्यः यतस्स स्वामी स परमन्दैवतं' इति ।

इत्थमुक्त्वा विरतवचनं तं राजानं सा शैब्यापि 'राजर्षे भर्तृपुत्रविरहदुःखमक्षमा सोढुमहमप्यास्मिन् वैश्वानरे निपत्य भवन्तमनुयास्यामि । नाकसुखं नरकदुःखं वा सममेवावां भोक्ष्यावहे' इति प्रार्थयामास ।

राजापि तत्प्रार्थनां 'एवमस्तु' इत्यङ्गीचकार । अनन्तरमुचितां चितां विरचय्य तस्यां स्वीयं तनयमारोप्य तामग्निना प्रज्वाल्य तस्मिन्नग्नावात्मानं होतुं सपत्नीकस्साञ्जलिकश्च हृदयगुहामधिशयानं अनादिनिधनं परमात्मानं नारायणं दध्यौ ।

तस्मिन् राजर्षौ जगदीशं ध्यायति सर्वे गीर्वाणास्सवासवाः धातारं धर्मं पुरस्कृत्य सत्वरं तन्देशमाजग्मुः । आगत्य च ते सर्वे राजानमालोक्य प्रोचुरेवं 'भो भो महाराज धार्मिकोत्तम हरिश्चन्द्र शृणु वचनमस्माकं । अयं भगवान् पितामहस्साक्षाद्धर्मः एते सह-

स्त्राक्षप्रमुखा लोकपालाः इमे सिद्धसाध्यनागगन्धर्वाः इमावश्विनौ अमी विश्वे देवास्समरुद्गणाः एते वयमन्ये च बहवो देवास्तथायं महर्षिर्विश्वामित्रोऽपि त्वान्द्रष्टुमागतास्स्मः । यस्तव सत्यं तितिक्षामार्जवमन्यांश्च गुणान् परीक्षितुं त्वां राज्यादभ्रंशयत् । अभयदातुस्तव दुस्सहं यत्कृतन्दुःखमालोकितुमक्षमास्तिस्रो विद्याः स्वयमेव त्वत्प्रीत्यै यं समाश्रयन् । सोयं विश्वामित्रस्त्वद्गुणनिकुरुम्बैः विद्यात्रितयलाभेन च नितान्तसन्तुष्टः त्वया सह मैत्रीं चिकीर्षति' इति ।

अथ भगवान् धर्मोऽपि 'राजन् साहसं माकार्षीः । धाता धर्मोऽहं तव सुनिर्मलैस्तितिक्षाशमदमसत्यादिभिर्गुणैस्सञ्जातपरितोषस्त्वां द्रष्टुमुपागतोऽस्मि' इति राजानं व्यजिज्ञपत् ।

अनन्तरमाखण्डलोऽपि 'महाभाग हरिश्चन्द्र भवदीयसत्यादिमुदितः शक्रोऽहमुपयातेऽस्मि तवोपकण्ठम् । सभार्यापुत्रेण भवता दिव्यास्सनातनाः लोकाः विजिताः । ततस्समन्वितः पत्नीपुत्राभ्यामात्मीयकर्मभिर्जितमनितरदुष्प्रापं त्रिविष्टपमारोह' इति स्वीयमाशयममायमुदीर्य तदनन्तरमपमृत्युविनाशकममृतमयं वर्षमाकाशाच्चितामध्ये प्रावर्षत् ।

तदनु देवा अपि सुमहतीं पुष्पवृष्टिमवाकिरन् । दुन्दुभीनप्यध्वनयन् ।

तदानीमितस्ततो देवसमाजे वर्तमाने तस्य महात्मनो हरिश्चन्द्रस्य तनयो रोहिताश्वस्सुप्तोत्थित इव समुत्थितोऽभूत् ।

ततो राजा राज्ञी च प्रसन्नेन्द्रियं स्वस्थमानसं सुकुमारशरीरं कुमारं पर्यष्वजेताम् । परममानन्दमविन्दताम् । तत्क्षणं दिव्यमाल्याम्बराभरणालङ्कृतौ निजरूपसंपदा रतिमन्मथावप्यतिशयानौ सन्तुष्टमानसौ चाभूताम् ।

भूयो महेन्द्रो महीन्द्रं हरिश्चन्द्रमभाषत 'महाबाहो निर्मलानां निजकर्मणां अपरिमेयानि फलान्यनुभवितुमाभ्यां भार्यापुत्राभ्यां साकमारोह नाकं' इति।

तदाकर्ण्य हरिश्चन्द्रे 'देवराज श्वपचेन स्वामिनाऽननुज्ञातः तस्य निष्कृतिमनारच्य सुरालयं नारोक्ष्यामि। शैब्यापि विप्रस्य निष्कृति मकृत्वा कथं ततो विमोचयितुं शक्यते' इति स्वाशयमाविष्कुर्वति सति।

धाता धर्मोऽपि 'राजन्नेवं भविष्यन्तं तव क्लेशमवगम्याहमेवात्ममायया चण्डालतां परिगृहीतवान् त्वाञ्च क्रीतवान् पक्कणादिकञ्च दर्शितवानासं। वाराणसीनाथश्शूलपाणिरेव विप्रतां प्रतिपन्नवान् त्वद्भार्यापुत्रावपि धनेन लब्धवान्। अस्मत्प्रीतये त्वया समनुष्ठितानां अपरिमेयदानानांमस्मासु समर्पणेन तव सुतरामधमर्णायितैर्देवैरस्माभिस्तव निष्कृतौ यया कया च विधया कर्तव्यायां चण्डालरूपप्रतिच्छन्नस्य धर्मस्य मम विप्रशरीरगुप्तस्य शूलपाणेश्च त्वया निष्कृतिरारचयितव्येत्यत्यन्तबाधितमिदं' इत्युदीरयामास।

'हरिश्चन्द्र यत्समस्तैर्मानवैः प्रार्थ्यते तत्परमं पुण्यकृतां स्थानमारोह' इति कथयति देवराजे।

हरिश्चन्द्रोऽप्येवं प्रत्युवाच 'देवराज नमस्ते। सप्रश्रयं यदहं भवन्तं ब्रवीमि तन्मम वचनं प्रसादसुमुखस्त्वमाकर्णय। कोसलेषु विशेषतश्च साकेते जनास्सर्वे मयि भक्तिमन्तस्सन्ति। मच्छोकमग्नमनसस्तानुत्सृज्य कथमहन्दिवं यास्यामि। "यादृशं पातकं ब्रह्महत्यया गुरोर्घातेन गोहननेन स्त्रीवधेन च समुत्पद्येत तादृशं भक्तांस्त्यजतः" इति शास्त्रकृतो वदन्ति। अदुष्टमत्याज्यं भक्तिमन्तञ्च जनमुत्सृजतः पुंसो नैहिकमामुष्मिकञ्च सुखमुत्पश्यामि। तत्कस्मै प्रयोजनाय नाकमारोक्ष्यामि। सुरपते मया साकं ते नागरा अपि यदि त्रिदिवमायास्यन्ति तदाहमपि स्वर्गमागमिष्यामि। यदि ते नरकं व्रजिष्यन्ति तर्ह्यहमपि तमेव व्रजिष्यामि' इति।

तद्वचो निशम्य शक्रोऽपि 'राजन् भिन्नभिन्नानि सुकृतानि दुष्कृतानि च रचितवद्भिस्तैस्समं कथं यौगपद्येन भोज्यं स्वर्गमीप्ससि' इति राजानमुवाच ।

राजापि 'भो महेन्द्र नृपतयस्सर्वेऽपि प्रजानां साहाय्यमन्तरा न शक्नुयुरखिलं राज्यं पालयितुं महतः क्रतूननुष्ठातुं इतराणि पुण्यानि वा कर्माणि कर्तुञ्च । अहञ्च यासामवलंबेनैव तत्सर्वमन्वतिष्ठं कथं कल्पितोपकारास्ताः प्रजाः स्वर्गलिप्सया सन्त्यक्तुं प्रभवेयम् । यन्मम पुण्यकर्मणामिज्याध्ययनदानादीनां विद्यते फलं तन्मम प्रजानाञ्च साधारणमस्तु । यन्मदीयसुकृतकर्मफलभूतमुरुकालोपभोज्यं सुखमास्ते तदेकमपि दिनं भवत्प्रसादान्मम ताभिस्सममेवास्तां' इति देवराजञ्जगाद ।

त्रैलोक्यपतिरिन्द्रोऽपि 'राजन्नेवं भवतु' इति प्रत्युदीर्य सह देवैरखिलैस्साकं प्रसन्नचेतसा धर्मेण साकं राज्ञो मित्रतामुपगतेन विश्वामित्रेण समञ्च हरिश्चन्द्रेण सदारदारकेण निमेषमात्रादयोध्यानगरञ्चातुर्वर्ण्यमेदुरमवाप ।

आगतम्महाराजमीक्षितुमतित्वरितमायातानखिलान् पौरानालोक्य विबुधाधिपतिरभिदधे 'भोभोः कोसलानधिवसन्तो मानवास्सर्वे यूयमागच्छत त्रिविष्टपमकृतसुकृतदुरवापं । सत्यदानदयादिभिरमलैर्गुणनिकरैर्हरिश्चन्द्रे नितान्तं प्रसन्नस्य भगवतो धातुर्धर्मस्य प्रसादाद्भवतां हरिश्चन्द्रभक्तानां विमानकोटिसंबाधमस्मद्भुवनम्महीतलकल्पमजनि। तद्विमानान्यारोहत यथेच्छं। अनश्वरं दिव्यसुखमनुभवत' इति ।

तद्वचश्शचीपतेर्निशम्य जनाः काममानन्दतुन्दिला बभूवुः । महानुभावस्य तस्य भूपतेः कृतज्ञताविशेषस्य सस्मरुः । दारैर्दारकैस्सेवकैश्च समं स्वरारुरुहुः । तत्रापि पदे पदे विमानाद्विमानमापुः । वाङ्मनसागोचरञ्च दिव्यसुखमीयुः ।

महातपाः पार्थिवो हरिश्चन्द्रोऽपि प्रियं रोहिताश्वाह्वयं तनयं रमणीये साकेतनगरे सहामरैर्मुनिभिश्च ससन्तोषमभिषिषेच ।

राज्ञस्सर्वे सुहृदस्तमतुलां विभूतिमधिगतमुदीक्ष्य परं जहृषुः।

हरिश्चन्द्रः कुमारमपि देवताप्रसादादधिगतराज्यभरणप्रावीण्यं विज्ञाय नश्वरमर्त्यलोकसुखमुत्सृजद्भिश्शाश्वतममर्त्यभुवनसुखमीप्सद्भिस्सुहृद्भिर्भार्यया शैब्यया च साकं सशरीर एव प्राकारतोरणादिभिस्सनाथं चारणानां वादित्रैर्मुखरितं अप्सरसां नृत्तगीतैरलंकृतं पुराकारं विमानमध्यासाञ्चक्रे । भासा भास्कर इव बभासे । अनितरसुलभानि स्वस्सुखानि सह सहृद्भिर्यथाकाममानशे ।

तदानीमखिलशास्त्रतत्ववेदी महात्मा दैत्यगुरुर्हरिश्चन्द्रस्य तादृशीं भूतिमुद्वीक्ष्य सानन्दमित्थञ्जगौ । 'हरिश्चन्द्रसदृशः पार्थिवो नासीन्न वर्तते न भविष्यति । अहो अस्यान्यादृशी तितिक्षा असदृशान्दानं अनुपमं सत्यं अपरिमेयाश्चेतरे गुणाः । यन्महिम्ना हरिश्चन्द्रोऽयमवनीपतिश्शाश्वतममरत्वमयाञ्चक्रे । महेन्द्रस्यार्धासनमप्यलञ्चक्रे' इति ॥

एतादृशीं भार्गवोक्तिमवलंब्य सकलपुराणपारदृश्वा कश्चिदाप्तेष्वन्यतमस्तस्य महात्मनो हरिश्चन्द्रस्य चरितसारं "सत्यन्दानं तितिक्षाञ्च गुणेषु परमं विदुः । सत्यादिना हरिश्चन्द्रः परामुन्नतिमाभजत्" इतीमं श्लोकं शिष्यजनपरमोपदेशमुदाहरदाकलितसकलजनकर्णमंगलम् ॥

वल्लवीनयनानन्दचन्द्रं सद्गुणमन्दिरम् ।
वन्दे मुकुन्दमानन्दकन्दलं कृतमङ्गलम् ॥

इति श्वेतारण्यनारायणशर्मणा रचिते गद्यकाव्ये प्रख्यातं
हरिश्चन्द्रचरित्रं समाप्तिमगमत् ॥

---

# ॥ पतिव्रतामणिकौशिकीचरितम् ॥

—(*)—

वन्दे वन्दारूणां मन्दारतरुं मनोज्ञगुणवृन्दम् ।
कन्दर्पकोटिसुन्दरमानन्दघनं परेशगोविन्दम् ॥
पातिव्रत्यकृशानुः कश्चिन्निरवापयत्सहस्रांशुम् ।
उददीपयत्तमन्यः पातिव्रत्याग्निरेतदतिचित्रम् ॥

आसीत्प्रतिष्ठानाभिधाने पत्तने कश्चित्कौशिकनामा द्विजन्मा। स तावज्जननानन्तरकृतैर्दुरितैरभवन्महता कुष्ठरोगेण परिपीडितः।

तादृशमपि तं पतिं तद्भार्या देवमिवार्चत् । तथाहि—सा प्रतिदिनं सुगन्धिना तैलेन तस्य पादाभ्यञ्जनमातनुत । कोमलेन निजपाणितलद्वयेन तस्याङ्गानि यथासुखं समवहत । तत्तत्कालानुरूपे तोये तमस्नपयत् । धवले मृदुनी च वाससी तेन पर्यधापयत् । पथ्यमभीप्सितमन्नमादरेण तमाशयत् । असृङ्मूत्रपुरीषादिलिप्तान्यपि तस्याङ्गानि सम्यगजुगुप्सितमक्षालयत् । रहसि च प्रियसम्भाषणादिभिस्तमुपाचरत् ।

इत्थमनिशमर्च्यमानोऽपि विनीतया तया स प्रकृतिनिष्ठुरः काममनल्पकोपस्तां भर्त्सयन्नेवावर्तत ।

तादृशपरुषवचनमप्यतिबीभत्सुमपि तम्पतिं सा सर्वश्रेष्ठममन्यत । परदैवतवत्तस्मिन् परमां भक्तिमकुरुत ।

स कदाचित्कौशिकश्चंक्रमणशक्तिवियुक्तोऽपि साध्वीं भार्यामेवमवादीत् 'अयि धर्मज्ञे याद्य प्रातर्गृहबहिर्वेदिमध्यमधिष्ठितवतो मम दृष्टिपथमध्यगमत् । या ललितया गत्या राजमार्गमलमकार्षीत् । या दर्शनानन्तरमेव मम हृदयमाविशत् । या सूर्योदये मन्मानसं प्रविष्टा संप्रति रात्रावागतायामपि ततो नापसर्पति । तस्या वेश्यायास्सद्म

माङ्गमय । ताञ्च सङ्गमय । यदि तां कनकसच्छायां कमनीयसकला-वयवां नोपगूहेयं तदा निधनमुपगच्छेयम् । या बहुभिः प्रार्थिताऽपि नैकत्रापि रतिमातनुते तस्यामासक्तिमुत्पादयतः या निष्कपटमेकस्मिन्नेव रतिमती तस्यामासक्तिमनुत्पादयतश्च कामस्य मनुष्येषु वामतामवगत्यापि तद्वशमेव गच्छति विद्वानपि जनः" इति ।

इत्थं कामातुरस्य भर्तुर्वचनमाकर्ण्य सद्विजवंशजा सा पति-व्रता पत्युः प्रियं चिकीर्षन्ती दृढं परिकरमाबध्य द्रव्यमप्यधिकं परिगृह्य भर्तारमंसमारोप्य तं तद्वेश्याभवनं प्रापयितुं स्वगृहात्प्रतस्थे । निशायां गाढान्धकारायां व्योमनि मेघावृतेऽपि विद्युत्प्रदर्शितं राज-मार्गमतिकृच्छ्रेण विज्ञाय मन्दमन्दञ्जगाम । अधिमार्गमागच्छन्तं गच्छन्तं तिष्ठन्तमुपविशन्तं स्वपन्तं वा कञ्चन प्राणिनं नावजगाम । भर्तृभक्तिपरवशा न किमप्यत्याहितमूहाञ्चक्रे ।

तदनु पत्नीस्कन्धमारूढस्स कौशिकः पथि चोरशङ्कया शूल-मारोपितमचोरम्माण्डव्याख्यम्महर्षिमतिदुःखार्तमन्धे तमसि निजच-रणयोर्यादृच्छिकसङ्घट्टनेन चालयमास ।

[यस्तावद्राजद्रव्यमपहृतवद्भिः स्वतपोवननिलीनैस्सद्रव्यं गृही-तैश्चोरैस्सह चोरशङ्कया गृहीतो राजपुरुषैः बाल्ये पतङ्गिकानां पुच्छे-ष्विषीकारोपणादुद्भूतस्य दुरितस्यावश्यभोक्तव्यतया शूलमारोपितो-ऽपि तपस्येव तस्थौ । बहुतिथे समये समतीते विज्ञाय राज्ञा प्रसाद्य कीलकं विभिद्य शूलादवरोपितः कीलकशेषतया जगत्याणिमाण्डव्य इति प्रथां प्रपद्य यथेच्छमखिलान् लोकान् यश्चरिष्यति । आत्मन-श्शूलारोपणनिदानं पृष्टः शैशवानुष्ठितपताङ्गिकापुच्छेषीकारोपणपा-पमाख्यातवान् धर्मराजः स्वल्पस्य पापस्यैतादृशी शिक्षा न न्याय्येति सञ्जातकोपेन येन शूद्रयोनिं प्रविशेति शप्तः कुरुकुलभुजिष्यागर्भ-माविश्य महात्मविदुररूपेणावन्यामवतीर्य भगवद्भक्तिमुखान् सद्ध-र्मान् प्रख्यापयिष्यति ।]

स माण्डव्योऽपि कौशिकस्य पादावमर्शेन संभूतक्रोधस्तमेवमुवाच "अत्यर्थमाकस्मिकीमापदमेतादृशीमापन्नः पुनरहं येन चरणाभ्यामाचालितोऽस्मि स दुरात्मा नराधमः कष्टान्दशामनुप्राप्य सूर्योदये कृतान्तवशगः प्राणानसंशयं मोक्ष्यति" इति।

पतिव्रतापि तमतिदारुणमात्मवैधव्यकारणं शापं शुश्राव। भृशं विव्यथे। अनन्तरमनुस्मृत्य पातिव्रत्यमहिमानमवलम्ब्य धीरतामित्थमूचे "सकलधर्मेषु सतीनां पतिशुश्रूषणमेव गरीयान्धर्मश्चेत् तस्य च फलमवितथञ्चेत् तच्चोदकानि शास्त्राणि यद्यलं प्रमाणानि भवेयुः तर्हि भानुर्नोदयमयताम्। भर्तापि मम न म्रियताम्। अहमपि न वैधव्यं यायां' इति।

एवं शापप्रतीकारं रचयित्वा भर्तारङ्गणिकागारं गमयित्वा तस्य मनोरथं पूरयित्वा तं पुनर्निजसदनमानिनाय।

साध्व्यास्तस्यास्सत्यवचनतया रविर्नाविर्बभूव। बहून् दिवसान् सततं निशैव बभूव।

अथ सर्वदा निशास्थितिं दिनाभावञ्च निरूप्य सर्वे बिभ्युस्सुपर्वाणः। "वेदाध्ययनविहीनं वषट्कारविधुरं स्वधास्वाहाकाररहितमिदमखिलं भुवनं कथं न विनंक्ष्यति। यद्यहोरात्रव्यवस्था न स्यात्तदा तिथिवारनक्षत्रपक्षमासऋतुसंवत्सरादिकालाः कथं ज्ञायेरन्। कथं वा तत्तत्कालकर्तव्यास्सत्क्रियाः क्रियेरन्। अहोरात्रस्य व्यवस्थितिं दिवाकरस्योदयास्तमयाभ्याञ्जानते जनाः। दिवाकरस्तु पतिव्रतावचनान्नोद्गच्छति। तदनुदयात् स्नानदानादीनि सत्कर्माणि न तन्वन्ति। यज्ञकर्मवार्तामपि न श्रृणुमः। आहुतिभिः किल वयं तृप्तिमाप्नुमः। मर्त्यैर्यथाशास्त्रमर्पितैरुचितैर्यज्ञभागैराप्यायिता वयमनुकूलेन वृष्ट्यादिना मर्त्याननुगृह्णीमः। वर्षादिना निष्पादितैस्सस्यादिभिस्समृद्धा मानवाः पुनःपुनस्तत्तत्कालकरणीयैरध्वरैरस्मान् यजन्ते। मुहुर्मुहुरेतैरिज्यादिपूजिता वयमेभ्यः कामान्दद्मः। अधो-

वर्षाः खलु वयमूर्ध्ववर्षाः किल मनुजाः । यतस्तोयवर्षेण वयमधोगतान्मनुष्यान् तर्पयामः । तेऽपि हविर्वर्षेणास्मानूर्ध्वगतान् प्रीणयन्ति । ये नित्यानि नैमित्तिकान्यन्यानि च कर्माणि न कदाप्यनुतिष्ठन्ति । नास्मभ्यं हवींषि प्रयच्छन्ति । अयज्ञशिष्टेन केवलमवद्येनान्नेन स्वमुदरं पूरयन्ति । तेषामस्मदपकारिणां दुष्कृतकारिणां विनाशाय जलमनिलमनलमर्कमवनीञ्च वयन्दूषयामः । दुष्कृतिनस्ते च दुष्टजलादिभोगेन नानारूपानुपसर्गानतिदारुणान् प्रतिपद्यापमृत्युमपि लभन्ते । ये पुनरस्मान्विविधैर्हविर्भिः प्रीणयन्ति तच्छिष्टमश्नन्ति तेभ्यः पुण्यकृद्भ्यः प्रदद्मो वयमैहिकमामुष्मिकञ्च सुखमनितरसुलभं । एतत्सर्वमेतेषां विना वृष्टिन्नसिध्यति । वृष्टिस्तु यज्ञतर्पितैरस्माभिरुत्पाद्या । यज्ञः पुनरहोरात्रादिकालानाश्रित्य प्रवर्तते । ते च रवेरुदयास्तमयावाश्रयन्ते । कदा रविरुदेष्यति" इत्यन्योन्यमूचुः ।

एवं समेत्य परस्परमध्वरोच्छित्तिमाशंकमानानां तेषाममराणां वचनमाकर्ण्य परमेष्ठी तानेवं जगाद "भो भोस्त्रिदिवेशास्तेजस्तेजसैव तपस्तपसैव शाम्यति । पतिव्रतामाहात्म्यान्न रविरुदयते । रवेरनुदयादेव मर्त्यानाममर्त्यानाञ्चाकुशलमुत्पद्यते । तस्मादत्रेर्दयितां पतिव्रतान्तपस्विनीमनसूयां सूर्योदयकाम्यया प्रसादयत" इति ।

एवं पितामहोदितन्निशम्य वचनममी सुरास्सत्वरमनसूयामुपेत्य तां प्रसाद्य तया 'यथेष्टं व्रियतां' इति समीरितास्तामयाचन्त 'यथापुरं दिनं भवतु' इति ।

अनसूयापि दिवौकसां प्रार्थनामाकर्ण्य "भोस्सुमनसः पातिव्रत्यमहिमानं लोपयितुं न प्रवर्तेय । ततस्तां कौशिकीं सम्मान्य यथा पुनरहोरात्रव्यवस्था जनिष्यते तथाहमहस्स्रक्ष्यामि । यथा स तस्यास्साध्व्याः पतिः कौशिको न मरिष्यति तादृशमप्युपायमाचरिष्यामि"

इति तानुक्त्वा तैश्च समं तस्याः पतिव्रतायास्सुन्दरं मन्दिरञ्जगाम । ताञ्च कौशिकीं ददर्श ।

देवाः पुनस्तयोरुक्तिप्रत्युक्ती श्रोतुकामाः तस्थुरप्रत्यक्षाः ।

कौशिकी च पतिव्रताशिरोरत्नमनसूयां विलोक्य तामदृष्टपूर्वामप्यनसूयेति पातिव्रत्यमहिम्ना विज्ञाय ससंभ्रममुत्थाय सविनयं प्रत्युद्गम्य सादरमाहूय पीठे महत्युपवेश्य साष्टांगपातमानम्य पाद्यार्घ्यादिना संपूज्य तस्यास्तद्भर्तुश्च कुशलमापृच्छ्य तदाज्ञया स्वयमपि पीठे निषसाद ।

अनसूयापि निषण्णां कौशिकीं सादरमित्थमुवाच। "अयि कौशिकि कच्चित्कुशलमत्रभवत्यास्स्वधर्मरतायास्तव तत्रभवतः कौशिकस्य च। अपि नन्दसि सदा पत्युराननदर्शनात्। अपि मन्यसे भर्तारमभ्यधिकमखिलदेवताभ्यः । अनसूयया मयापि पतिशुश्रूषणादेव महद्गौरवमलभ्यत । स्त्रीणामखिलकामफलाप्तेः पतिसेवनमेव परमन्निदानं भवति ।

किञ्च पुरुषैरपाकरणीयमृणत्रयं । तथा कर्तव्यः स्ववर्णधर्मेण धनसञ्चयः । अधिगतन्धनं यथाविधानं सत्पात्रे विनियोज्यं । अपि च, सततं सत्यार्जवदयादानतपोभिरन्वितैर्भाव्यं । रागद्वेषादीनुदस्य श्रद्धां पुरस्कृत्य यथाशक्ति शास्त्रविहितानि कर्माण्यन्वहमनुष्ठेयानि। महता क्लेशेन निर्दोषमनुष्ठाय कर्माणि तत्तत्कर्मभिः प्राप्येषु प्राजापत्यादिकेषु तेजोमयेषु लोकेषु तत्तत्फलानि विचित्राण्युपभोज्यानि ।

एवं पुरुषैरतिकृच्छ्रेण सञ्चितस्य समस्तस्य सुकृतस्य यदपहरन्ति सममंशमबलास्तस्य पतिशुश्रूषणमेकमेव निमित्तं । स्त्रीणां न पृथग्यज्ञतीर्थसेवाजपतपश्श्राद्धदानोपवासप्रभृतयः क्रियाश्शास्त्रेषु विहिताः । अपि तु तत्फलभूतानां सनातनानां ज्योतिर्मयलोकसोपानानामारोहणं पतिशुश्रूषानिश्रेण्या सञ्जायते । ततस्सा-

न्या भवत्या भर्तृसेवनं प्रति प्रतिदिनमप्रमत्तया भवितव्यं । यतः स्त्रीणां भर्तैव परा गतिः" इति ।

कौशिकी च तस्यास्तद्वचश्श्रुत्वा सादरं प्रतिपूज्य तां प्रत्युवाच "धन्यास्मि यत्सर्वमानवैरपि प्रार्थनीयदर्शनाभिर्देवताभिर्मद्गृहमगाहि । यत्त्वममरैरपि प्रशस्यगुणगणा स्वयमुपेत्य पतिधर्मपरमाया अपि मम पुनश्श्रद्धामभिवर्धयसे ।

एतदपि विजानामि यत्स्त्रियाः पतिसमा काचिद्गतिर्नास्ति । पतिरेव परमं दैवतं । पतिप्रीतिमेव सर्वात्मना सीमन्तिनी संपादयेत् । पतिप्रसादादिह लोके नारी परमं यशः प्रतिपद्यते । प्रेत्य च पत्या सह शाश्वतं सुखममरभुवनेष्वधिगच्छतीति ।

नन्वेतदास्तां । तदविशंकं ब्रूहि मया वा मम भर्त्रा वा यत्करणीयमार्यायास्तव मन्मन्दिरमाप्तायाः" इति ।

अनन्तरमनसूयापि कौशिकीमेवञ्जगाद "अयि साध्वि पुरस्कृत्य शतमखमिमे बर्हिर्मुखास्त्वद्वाक्योदस्तहविषश्शोकजुषस्समुपागम्य मां यथापूर्वमखण्डितामहर्णिशावस्थामर्थयन्ते । तदर्थमहमत्रभवतीमुपयातास्मि । मद्वचनमवधेहि । दिनाभावेन समस्तानि यज्ञादीनि कर्माणि व्यनश्यन् । तद्विनाशेन सुराः पुष्टिं पूर्ववन्नोपयान्ति । तेषां पुष्ट्यभावे भवेदनावृष्टिः । तया जगदुच्छेदमेष्यति । ततस्त्वमखिलञ्जगदापदस्समुद्धर्तुमिच्छसि चेद्यथापूर्वं भानोरुदयमभ्यनुजानीहि" इति ।

कौशिक्यप्यनसूयावाक्यमाकर्ण्य "भगवति यद्यहमभ्यनुजानीयामहस्करोदयन्तदा माण्डव्येनातिमन्युना शप्तो मद्भर्ता पञ्चत्वमाप्नुयात्" इति तां प्रतिजगाद ।

अनसूयापि "यद्यर्कोदयमनुमन्येथास्तर्हि तव भर्तारं जीववन्तं कमनीयञ्चातनुयां । सर्वदा मया पतिव्रतानां माहात्म्यमारोप्यमिति भवत्या गिरं सम्मानयामि" इति कौशिकीं पुनरब्रवीत् ।

कौशिक्यपि "यद्यार्यायै ते रोचते तदनर्गलमारच्यतां" इति तां प्रत्यवदत् ।

तदनु दयिता महर्षेरत्रेरनसूया दशसु दिनेषु भास्करोदयरहितेषु व्यतीतेषु सनियमा समन्त्रकमर्घ्यमुद्यम्य सूर्यमाजुहाव ।

ततो भगवान्विवस्वान्विकचकमलारुणाकृतिरुरुमण्डलश्शैलराजमुदयगिरिमारुरोह ।

अनन्तरमेव माण्डव्यमहर्षिशापात्कौशिकः प्राणैर्वियुक्तो महीतले पपात । पतन्तं पतिं सा पतिव्रता जग्राह ।

अनसूयापि "अयि भद्रे मा विषादं गमः । पश्य मे बलं । यच्चिरात्पतिसेवनेन तपः किञ्चिदार्जयं । रूपशीलबुद्धिवाङ्माधुर्यादिभिः पतितुल्यमन्यं पुरुषं कदाचिदपि यन्नापश्यं । तेन सत्येनाय मवनीसुरो जीवतु । यथाऽहमन्यद्दैवतमपि न पत्या सममुत्पश्यामि तथाऽसौ विप्रः पुनर्जीवितमेतु निरामयश्च लसतु । यन्मम नित्यमुद्यमः कर्मणा मनसा वाचा च भर्तुराराधनं प्रत्येव भवति तेनावितथमेष द्विजन्मा कुष्ठादिव्याधिमुक्तः पुनर्युवा कमनीयश्च जीवितमधिगच्छतु । दयितासहितश्च शरदां शतमनुभवतु यथेच्छमैहिकसुखं" इति त्रिवारमुच्चैस्तरां गिरमुदीरयामास ।

इत्थमनसूयया पतिदेवतया तया गदितमात्र एव वचसि स कौशिकस्सुप्तोत्थित इव समुत्तस्थौ । प्राग्जन्मसञ्चितान्महतो रोगान्मुमुचे । पुनरपि तारुण्यं प्रतिपेदे । स्वभासा तद्वेश्म भासयामास । जरामरणरहितो बृन्दारक इवासामास ।

ततस्सुमनसस्त्रिदिवात्सुमनसो ववृषुः । देववाद्यानि च समन्ततो नाना विनेदुः । गन्धर्वचारणाः कलं जगुः अप्सरसश्च ललिततमं ननृतुः

शचीपतिप्रभृतयस्सुरततयः पतिव्रतामणेरनसूयायाः प्रभावमनितरसुलभमालुलोकिरे परमं स्वयम्मुमुदिरे । वाचा च तां शश्लाघिरे । प्रत्यक्षीभूय ववृतिरे । भाभिश्च बभासिरे ।

तदनु तन्मध्यमध्यासीना ब्रह्मविष्णुमहेशास्त्रयो देवेशास्ताम्अखिलजगदुपकारिणीमनसूयामेवमूचिरे "अयि कल्याण्यत्रेर्गृहिणि वरमभीप्सितं वृणीष्व यतस्त्वया महदनितरसुकरममरकार्यमकारि । ततस्तुभ्यमीप्सितवरवितरणसमुत्सुकास्स्मः" इति ॥

अत्रिदयितापि तेषां वचनमाकर्ण्य "यदि मे प्रसीदेयुः तत्रभवन्तो भवन्तः । यदि मां वरयोग्यामुत्पश्येयुः । तदा मम पुत्रताम्अधिगच्छेयुः । अहमप्यविनाभूता पत्या संसृतिबन्धनिवर्तकं परमं योगं सञ्चिनुयां । पुनरावृत्तिरहिताञ्च परां गतिमाप्नुयाम्' इति तान् प्रार्थयामास ।

ते च "तथैव भूयात्" इति तामनुजगृहुः । ताञ्च यथान्यायं सम्मान्य सकलैरमरैस्सह स्वं स्वमावासञ्जग्मुः ।

अनसूयापि कौशिकीममरसरूपमभीकमभीकमधिगतवतीमामन्त्र्य स्वाश्रममियाय । भर्तारमलिमकपटमुपचचार । कालक्रमेण देवेशानुग्रहात्त्रीनात्मजान् ब्रह्मरूपमिन्दुं विष्णुरूपन्दत्तात्रेयं रुद्ररूपन्दुर्वाससञ्च जनयामास । पत्या सह सुचिरमैहिकसुखमनुभूय परां योगविभूतिमधिगम्य परमं मंगलानाञ्च मंगलमानशे कैवल्यसुखं ॥

वन्दे सुन्दरसुन्दरमिन्दुमुखं कलितसकलसकलसुखं ।
शतमखमुखबर्हिर्मुखवन्दितचरणद्वयं सरोजदृशं ॥

इति श्वेतारण्यनारायणशर्मणा रचिते गद्यकाव्ये प्रख्यातं
पतिव्रतामणि कौशिकीचरितम् समाप्तिमगमत् ।

---

# ॥ उर्वशीपुरूरवश्चरित्रम् ॥

वन्दे मुकुन्दमानन्दकन्दं कन्दर्पसुन्दरम् ।
वन्दारुबृन्दमन्दारममन्दंगुणमन्दिरम् ॥
वागन्वेति मनो लोके यथा लक्ष्मीस्वयंवरे ।
पुरूरवसमाचख्यौ लक्ष्मीवेषोर्वशी पतिम् ॥

आसीत्प्रितिष्ठाननाम्नि नगरे पुरूरवा नाम नरपतिः । यश्चन्द्रस्य तनयाद्बुधादिळायामुदजनि। यं शशिवंशमुक्तारत्नमामनन्ति विद्वांसो गरीयांसः । यश्च काशीराजस्य दुहितरमौशीनरीं पर्यणयत् । यश्च यथाशास्त्रमवनीमपालयत् ।

स भूपालः कदाचिद्भगवन्तं भास्करमुपतिष्ठमानो वियति समुद्भूतं " यस्सुरेषु स्नेहवानाकाशे च गतिमानास्ते स परित्रायतामस्मान् " इत्यप्सरसामाक्रन्दितमाकर्णयामास। अनन्तरमारुह्य रथोत्तममाकाशसञ्चारे क्षमं आलोक्य रंभादीनामप्सरसां गणमनुपमं 'कस्मा द्भवत्यो रक्ष्याः' इति ताः पुरन्दरस्य वेशवनिताः पप्रच्छ ।

तदनु तासाम्मध्यादूरुविजितरंभा रंभा "परित्रातव्या वयमसुरापशदाद्वीर्यवता भवता" इति कथयामास ।

ततो महीपतिरपि " कः पुनरसुरहतकः कमपराधं भवतीनामन्वतिष्ठत् " इति ताः पुनरपृच्छत् ।

अथ वितथेरश्रीका मेनका मध्ये तासामेवमवोचत् " शशिकुलचूडामणे राजमणे श्रूयतां भवता क्षणमवधानवता । या तपसो भीतस्य देवराजस्य मनोहरमस्त्रं । या लक्ष्मीमपि रूपेणातिशेते । यां

विना स्वर्गोऽपि न शोभते । यस्याः नारायणस्य महर्षेरूरुदेशाज्जन्मगृहमाचक्षते । प्रियसखी साऽस्माकमुर्वशी सन्तोष्य कैलासनाथमात्मीयेन वारप्रवृत्तेन नृत्तेन कुबेरसदनादागच्छन्ती मध्येमार्गमकस्मादापतितेन हिरण्यपुरवास्तव्येन केशिनाम्ना दानवहतकेन सख्या सह चित्रलेखया बलाद्गृहीता दिशा च पूर्वोत्तरया नीता" इति ।

अनन्तरमसौ सार्वभौमः "भो भो स्वर्वेश्यास्त्यजत भीतिम् । विमुञ्चत विषादम् । युष्माकं प्रियसख्यौ प्रत्यानेतुं प्रयतिष्ये । यावदागच्छामि तावन्मामस्मिन् हेमकूटनाम्नः पर्वतस्य शिखरे प्रतिपालयध्वं" इति सान्त्ववचनानि ताभ्यः प्रकाममप्सरोभ्यस्समाचख्यौ । 'सूत दिशमैशानीं प्रति तुरगानाशु प्रेरय' इति सारथिमादिदेश । सारथिना प्रेरितानाञ्च वाजिनां वैनतेयवेगमप्यधरीकुर्वन्तञ्जवमालुलोके । भृशमानन्दमानशे । तमसुरापशदमुद्दिश्य प्रतस्थे ।

तदनन्तरमप्सरसस्तस्य राज्ञो वचनमवितथमूरीकृत्य भीतिमपि केशिसम्भूतां दूरीकृत्य नृपेण विनिर्दिष्टमतिद्राघिष्ठं हेमकूटशृङ्गमुत्तुङ्गमारुरुहुः । यथायोग्यं स्थानमधितस्थुः । मिथश्चेत्थमाबभाषिरे "अपि नाम स महात्मा राजर्षिरस्माकमार्तिमुत्पाटयेत् । अपि नाम दुर्जयन्दनुजाधमङ्केशिनन्नाशयेत् । अलं संशयेन । अनेकशो देवेशोऽपि सङ्ग्रामे महति समुपस्थिते सति राजशेखरमिमं पुरूरवसमेव भूलोकात्सबहुमानं समानाय्य सेनामुखे नियोज्य विजयमनितरसुलभमलभत" इति ।

नृपतिरपि आस्थाय मृगकेतनं सोमदत्तं रथमतिवेगैस्तुरङ्गैस्सनाथम् । प्रस्थाय पूर्वोत्तरान्दिशम् । अन्विष्य तमसुरगणमतिजवेन धावमानम् । आसाद्य तममरद्विषं केशिसञ्ज्ञाजुषमप्सरोमुषम् । आयुध्य योद्धुमागतेन बलवता दैत्यव्रातेन । निपात्य दनुजबलानि निखिलानि । निहत्य केशिनमवलेपावेशिनम् । निवेश्य च स्वरथे चित्रलेखयाऽवलम्बिताम्भयमीलिताक्षीमुर्वशीम् । निववृते हेमकूटकूटं विशङ्कटम् । मार्गमध्ये चित्रलेखया समाश्वासितामपि संज्ञामप्रतिपद्यमानामुच्छ्वास-

मात्रेण सम्भावितजीवितामुर्वशीन्ददर्श । प्रोवाच चेत्थं "अयि सुन्द-रि भीरु मा भैषीः । जगतान्त्रयमभिरक्षता महेन्द्रेण सुरारयो व्यध्व-स्यन्त । दनुजभयेन निमीलितं लोचनं प्रातः कमलिनी कमलमिवो-न्मीलय । चित्रलेखे भवत्यास्सखी बलवदस्वस्था परिदृश्यते । वक्षसि मुहुरुच्छ्वसता मन्दारकुसुमहारेण बलवन्तं हृदयकम्पमुद्वहति । द्रुतं परिक्षान्त्वय प्रियसखीं प्रियवचनैः" इति ।

अनन्तरमभिसान्त्विता चित्रलेखया चिरमुर्वशी कथं कथञ्चि-त्कम्पं विजहौ । भीतिञ्च विससर्ज । प्रकृतिमपि निजामापेदे ।

अथ चित्रलेखात्ववादीदुर्वशीं "सखि विस्रब्धा भव । देवार-योऽपि ते दुष्टाशाः पराभूताः" इति ।

अनन्तरमुर्वशी चक्षुषोर्द्वितयमुदमीलत् । सखीञ्च प्रत्यवदत् । "अयि सखि निजप्रभावादस्माकमापदमपिजग्मुषा जम्भद्विषा विजिताः किन्दानवाः" इति ।

Indra

तदनु चित्रलेखा तां पुनरवोचत । "सखि नहि महेन्द्रेण ते जिताः। किन्त्वनेन महेन्द्रसदृशेन महात्मना राजर्षिणा पुरूरवसा"इति।

अनन्तरमुर्वशी' राजानमालोक्य मनस्येवममन्यत । "मम दानवानामपकारोऽप्युपकारायैवाभवत् । इतरथा सोमसदृशमिमं राजा-नं कथं पश्येयम् । अमन्दमानन्दञ्च कथमनुभवेयं" इति ।

तदानीं राजापि तामुर्वशीं प्रकृतिस्थां निर्वर्ण्यात्मन्येवमचिन्त-यत्। "अहो इयमतिशेते रमामप्याभया । तिरस्कुरुते शशिनमान-नेन । धिक्कुरुते नीलमेघमलकमहिम्ना । विजयते नीलोत्पले लोच-नाभ्याम् । अधः कुरुते प्रवाळमधरेण । परिभवति कुन्दकुड्मला-न्दन्तपङ्क्त्या । न्यक्करोति कम्बुमपि कन्धरया । परिहसति मृणाललते भुजलताभ्याम् । अवमन्यते चक्रवाकौ कुचयुगेन । वहति कार्श्यमुदरे । भरति शून्यताम्मध्ये । जयति शुण्डे सक्थिभ्यां। भीष-यति कमले चरणाभ्याम् । युज्यते पुरा पुनरमूमृषेर्भगवतो नारायण-

स्य सञ्जातामूरुदेशादुद्वीक्ष्य व्यलज्जन्त सर्वास्सुरगणिका इति । नैनाम्मनोहररूपां स मुनिर्नारायणश्श्रुतिपाठपारायणास्तिरस्कृतविषयैषणस्स्रष्टुं शक्नुयात् । किन्तु चन्द्रः कान्तिमान्वा निरमात् । आहोस्विच्छृङ्गारयोनिश्श्रीपुत्रो वा निर्ममे। उत कुसुमाकरो वा वसन्तस्ससर्ज । अथवा देवरहस्यन्दुर्विज्ञेयं " इति ।

एवमुर्वशीपुरूरवसावन्योन्यमतिसमुत्सुकाभ्यां लोचनाभ्यान्ददृशतुः । परस्परालापामृतान्यतितृष्णाभ्यां श्रवणाञ्जलिपुटाभ्यां पपतुः । परस्परस्मिन्मनो बबन्धतुः ।

नरपतिरप्युर्वशीं विविधनर्मालापैस्तरलीकृतचित्तां कलयन् हेमकूटशिखरमाससाद । स्यन्दनादवततार । ताञ्च सख्या चित्रलेखया सममवतारयामास ।

रम्भाद्याश्च सुरवाराङ्गनास्सानन्दभरमुर्वशीञ्चित्रलेखाञ्च दृढतरमालिलिङ्गुः । राजर्षिञ्च सभाजयामासुः ।

तस्मिन्नन्तरे चित्ररथो नाम गन्धर्वराज आकाशादवतीर्य हेमकूटमासाद्य राजानमालोक्य ससभाजनमाह स्म " महाराज केशिना हृतामुर्वशीन्नारदादुपलभ्य प्रत्याहरणायास्याश्शतक्रतुना गन्धर्वसेना समादिष्टा । ततो वयमन्तरा चारणगणेभ्यस्त्वदीयं जयोदाहरणमुपश्रुत्य त्वामिहस्थन्द्रष्टुमागताः । स भवानिमां पुरस्कृत्य सहास्माभिर्मघवन्तं द्रष्टुमर्हति " इति ।

तदाकर्ण्य राजा " गन्धर्वपते नायमवसरो मम शतक्रतुं द्रष्टुम्। अतस्त्वमेवात्रभवतीं प्रापय प्रभोरन्तिकं " इति जगाद।

चित्ररथोऽपि 'यथा रोचते महाराजाय' इति निगद्य सर्वाभिरुर्वशीप्रभृतिभिरप्सरोभिरंबरमुत्पपात । राजानमुत्सृज्य गन्तुमप्रभवन्त्युर्वशी शरीरेण केव[illegible] मनसससार राजानं ।

राजापि निजरथमारुह्य कञ्चित्कालमुर्वशीमार्गोन्मुखस्तस्यामत्यासक्तमानसः स्वनगरमुपजगाम। आगम्य नगरमुर्वश्यामुत्कण्ठया दुर्मनायमानमात्मानं विनोदयिष्यन्नर्मसचिवेन साकं प्रमदावनमियाय। तत्र च विविक्ते समुपविश्यातिमुक्तलतामण्टपे सुहृदि स्वस्य परामुर्वश्यामासक्तिं ब्रुवन् तस्या रूपलावण्यादिकं वर्णयन् तत्प्राप्तावुपायमन्विष्यन् अतितरामसमबाणेन पीड्यमानः मन्दमन्दसञ्चारिमलयसमीरां आमूलाग्रमंकुरितसहकारां पाटलिमसुन्दरकुरवकां विकासोन्मुखबालाशोकां उदञ्चितपञ्चमोपमपरभृतकूजितां कुसुमितमाधवीलतां समृद्धिमपि वासन्तीमुदिक्षितुमपारयमाणः तदानीमकाण्डसमुद्भूतैर्दक्षिणाक्षिस्पन्दनादिभिश्शुभनिमित्तैरावेदितया प्रियतमाप्रत्याशया कथञ्चिन्मानसं संस्तभ्य कादंबिनीसमुत्सुकश्चातकइव गगननिहितदृष्टिरासांबभूव।

उर्वशी च त्रिदशालयेऽप्यवाङ्मनसगोचरसुखनिलये स्थातुमक्षमा पूरूरवसमधिगन्तुमुत्कलिकावती चित्रलेखया प्रियसख्या सह प्रतिष्ठानमागत्य राजानं प्रमदावनभुवमधिवसन्तं प्रणिधानेनावगत्य तत्र सन्निहिता तिरस्करणीविद्यया तिरोहिता नर्मसचिवेन सह तस्य नृपतेर्विस्रंभजल्पनानि निजानुरागनिवेदकानि सख्यासमं श्रृण्वती तन्निर्वेदम्मार्जयितुमात्माकांक्षितमप्यार्जयितुं सपदि तिरस्करणीमपनीय राजानन्ददर्श। आचारोपनतञ्जयशब्दञ्जगाद। सस्मितं ननाम।

राजापि सखीद्वितीयामुर्वशीमनंगप्रेरणया समागतामालोक्य ससंभ्रममुत्थाय तां हस्ते गृहीत्वा समुत्थाप्य सादरं कुशलमापृच्छ्य सलज्जामपि सखीसमुत्साहवचनैरधिगतधीर[illegible]मन्तिके समुपवेश्य तया सह कञ्चित्कालमनुराग[illegible]पमालापमाचरन्नात्मानं विनोद[illegible]यामास।

एतस्मिन्नन्तरे गगनान्तराद्देवदूतेन समीरितां "चित्रलेखे भरतमुनिना निबद्धं नवरससंबद्धं लक्ष्मीस्वयंवरनामकं रूपकं ललिताभिनयमालोकितुमाखण्डलस्सलोकपालस्समुत्सुकस्तत्त्वरयोर्वशीं" इति वाचमाकर्ण्य भृशमुर्वशी विषसाद । दीर्घमुष्णञ्च निशश्वास ।

चित्रलेखापि राजानमेवं विज्ञापयामास "परवशेयम्मम प्रियसखी महाराजेनानुज्ञाता शचीपतेरनपराद्धमात्मानञ्चिकीर्षति' इति ।

राजापि कथं कथमपि मानसं पर्यवस्थाप्य "नास्मि तत्रभवत्यास्स्वामिशासनपरिपन्थी परन्तु संस्मर्तव्योऽयञ्जनः" इति प्रत्युवाच।

उर्वशी च वियोगदुःखन्दर्शयन्ती राजानं सस्पृहं पश्यन्ती सख्या सह त्रिविष्टपञ्जगाम ।

राजापि तामपश्यन् सनिःश्वासं "सखे संप्रति चक्षुःफलमवसन्नं । सर्वथा हतोऽस्मि मन्दभाग्यः । असुलभवस्तुन्यभिनिवेशः परन्तापकारी भवति । तया सनाथस्य मम यत्प्रमदावनमतिसन्तोषणमभूत्तत्सपदि तया रहितस्य काममुन्मादनमास्ते । तद्गृहाभ्यन्तरमेव यास्यावः' इति विलप्य गृहाभ्यन्तरं प्रविश्यावश्यकर्तव्यमप्यनुष्ठातुन्नापारयत् । तामेवोर्वशीं प्रतिक्षणमग्रतः पृष्ठतस्समन्ततश्च भावनावशेन वीक्षमाणः काञ्चन कालकलामतिकृच्छ्रेणात्यवाहयत् ।

उर्वशी च त्रिदिवं प्रतिपद्य सादरमुपाध्यायेन भरतमुनिना लक्ष्मीस्वयंवररूपकं दिदृक्षोर्देवराजस्य समाराधनाय समादिष्टा लक्ष्मीभूमिकां परिगृह्य सकललोकपालाधिष्ठितं सुधर्मारंगमाविश्य तत्तद्रसान्तरेषु विचित्राभिनयादिभिस्सामाजिकान् परवशीकृत्यापि पुरूरवसि बद्धमानसतया भवितव्यतायाश्च दुर्विलंघ्यतया प्रमादस्खलितं वचनमुवाच । यतस्सा स्वयं लक्ष्मीभूमिकालंकृता सागरमहिष्याः वारुण्याः भूमिकामापन्नया मेनकया "अयि तनये समागतेषु त्रैलोक्यमण्डनेषु पुरुषधौरेयेषु सकेशवेषु लोकपालेषु कतमस्मिंस्तव हृदया-

भिनिवेशः" इति पृष्टा "पुरुषोत्तमे मम हृदयाभिनिवेशः" इति भणितव्ये 'पुरूरवसि' इति भणितवती। तदनन्तरमुपाध्यायेन "येन ममोपदेशस्त्वया लंघितस्तेन न ते दिव्यं स्थानं भविष्यति" इति शप्ता। अथ पुनर्लज्जावनतमुखी पुरन्दरेण "यस्मिन् बद्धभावाऽसि तस्य मे रणसहायस्य राजर्षेः प्रियं करणीयं। ततस्त्वन्तावत्पुरूरवसं यथाकाममुपतिष्ठस्व यावत्स परिदृष्टसन्तानो भवति" इत्यनुगृहीता।

तदनु सा समाज्ञप्ता पुरन्दरेण महीपुरन्दरं पुरूरवसमानंगतापविह्वलमासाद्य सचिवेषु निहितराज्यधुरेण तेन सह यथेच्छं विहर्तुं कैलासशिखरिप्रान्तगतं गन्धमादनवनं गता। तत्र मन्दाकिनीतीरे सिकतापर्वतैः क्रीडन्तीमुदयवतीं नाम विद्याधरदारिकां चिरं पश्यन्तं तं राजानमालोक्य "अयमस्यामौत्सुक्यवानास्ते" इति मत्वा तस्मै कोपवती बभूव। ततो भृशमसहना सा तस्य राज्ञो बहुविधमनुनयमप्रतिपद्यमाना गुरुशापसम्मूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रवेशानन्तरमेव काननोपान्तवर्तिलताभावेन परिणता।

ततस्सोऽपि राजा तस्मिन्नेव कानने प्रियतमामन्विष्यन्नुन्मत्तीभूतः 'इतउर्वशी ततउर्वशी' इति जल्पन् बभ्राम। पदे पदे मूर्छितः पपात। उन्मादावस्थान्तरितप्रकृतिर्नवजलधरं प्रियतमापहारिणं राक्षसम्मत्वा तं हन्तुं लोष्टं गृहीत्वा दधाव। तदनु तं सम्यग्विभाव्य नूतननीरदमवबुध्य पुनस्तत्र तत्र पर्यटन्मेघध्वनिसञ्जातप्रमदं नृत्यन्तं शिखरिणमासाद्य "नीलकण्ठ मम प्रियतमा किमस्मिन् कानने त्वया दृष्टा" इति तं पप्रच्छ। तस्मिन् किमप्युत्तरमदिशति "प्रतिवचनन्न ददाति मह्यमवलिप्तोऽयं बर्ही" इति तमुत्ससर्ज। पुनश्च जम्बूविटपमध्यासीनां विहगेषु पण्डितां परभृतीमुपेत्य प्रियतमाप्रवृत्तिमापृच्छ्य तयाप्यनुक्ते प्रतिवचने "किमनया पञ्चमगर्वितया" इति

तामपि विहाय मानसोत्सुकान् हंसानेत्य तत्सकाशादविदितप्रियाप्रवृत्तिः ततः प्रियासहायं कञ्चन चक्रवाकं प्रियावृत्तान्तमकथयन्तमुपालभ्य मधुकरमपि कमलमधिवसन्तं तूष्णींभूतं नीपस्कन्धनिषण्णं गजराजमपि स्वीयमनुयोगमशृण्वन्तं चक्रवाकवदधिक्षिप्य सुरभिकन्दरन्नाम पर्वताधीशं तदासन्नाञ्च गिरिनदीं तत्तीरे च चरन्तं कृष्णसारं क्रमादधिगत्य तानापृच्छ्य तैरप्यनुक्ते प्रतिवचने नितान्तदुर्मनाः कञ्चन प्रदेशञ्जगाम। तत्र च शिलाभेदगतं नितान्तरक्तं रक्ताशोकस्तबकसदृशं कञ्चन मणिमालुलोके। सादरं तमाददे। "यस्याश्शिरस्ययमलङ्करणीयस्सैव दुर्लभा मम प्रिया किमनेन मणिना" इति विचिन्त्य तं मणिं हातुमियेष। तदानीं "वत्स गृह्यतामयं पार्वतीचरणरागसमुद्भूतस्सङ्गमनीयो मणिः। धार्यमाणो यस्त्वरितं प्रियजनेन सङ्गममावहेत्" इति गगनगिरं शुश्राव। अनन्तरममुमनुत्सृजन् कानि चित्पदानि परिक्रम्य काञ्चित् कुसुमहीनामपि लतान्ददर्श। तस्यां मनो बबन्ध। तां प्रियामिव परिषस्वजे।

तदालिङ्गनमात्रेण लताभावं विहाय निजरूपमुर्वशी प्रपेदे।

राजापि तामालिङ्ग्य सुधाभिषिक्तइव शीतलितसकलावयवस्सुखपरवशस्स्वचक्षुषी कञ्चित्कालन्निमील्य। "किमिदमुर्वशीगात्रसंस्पर्शादिव निर्वृतिमुपैति मम गात्रं" इति विचिन्त्य शनैरक्षिणी उन्मीलयन् तामेव प्रियान्ददर्श। "अयि कोपने, मह्यमपराधलवमप्यकृतवते न क्रोद्धमर्हसि। यदीममागस्कृतमवबुध्यसे तर्हीतःपरमेतादृशाम्मन्तुन्न कलयेयं" इति तां प्रसादयामास।

उर्वशी च राजानमालोक्य बाष्पासारं विमुच्य "विजयस्व महाराज यन्मया कोपवशं गतया प्रापितोऽसीदृशीमवस्थां। यत्पुनरान्तरदृष्टिमापन्नया मया निरपराधस्त्वमवबुद्धः। तत्प्रसीद मह्यं" इति वाचमुवाच।

नृपोऽपि "अयि कल्याणि न तावदहं प्रसादयितव्यः

त्वद्दर्शनादेव प्रसन्नबाह्यान्तःकरणोऽस्मि । कथय कथमियन्तं कालम्मया विना न्यवात्सीः" इति, तां पप्रच्छ ।

सा च पुनरेवमवादीत् "शृणु महाराज पुरा भगवता महासेनेन तपसि स्थितेन रम्यमकलुषन्नाम गन्धमादनवनकच्छमधिष्ठितवता तपःपरिपन्थिनीनामप्सरसामागममपजिहीर्षुणाऽयमारचितश्शापः 'य इमं प्रदेशं स्त्री प्रविशति सा लताभावेन परिणंस्यति' इति । शापान्तश्च कृतस्तेनैव 'गौरीचरणरागसंभवं संगमनीयमणिं विना न ततो मोक्ष्यते' इति । विदिततद्वृत्तान्तापि गुरुशापसम्मूढहृदयाऽहं देवतासमयं विस्मृत्य भवदनुनयमप्युदस्य स्त्रीजनपरिवर्जनीयं कुमारवनं प्रविश्य वासन्तीलतात्मना परिणतिमभजं" इति ।

राजापि "प्रिये सर्वमुपपन्नं । अयं त्वत्संगमहेतुर्मणिः । मणिप्रभावात्त्वमासादिता मया" इति वाचमुदीर्य मणिं प्रदर्श्य तञ्च तस्यै समर्पयामास ।

सापि तम्मणिमादरेण परिगृह्य "अहो संगमनीयमणे वाङ्मनसातीतः किल तव महिमा । यतस्त्वामधिगतवता महाराजेनालिंगितमात्रैव प्रकृतिस्थाऽस्मि संवृत्ता" इति तं प्रशस्य मूर्धनि धृत्वा "प्रियंवद महान् खलु कालस्तव प्रतिष्ठाननगरान्निर्गतस्य । कदाचिन्मह्यमसूयिष्यन्ति प्रकृतयः । तदेहि गच्छाव प्रतिष्ठानं" इति वाचमुदीरयामास ।

राजापि 'तथैवास्तु' इत्युक्त्वा तया सह शनैश्शनैः प्रतिष्ठानमागत्य विचित्रभोगाननुभवन्महान्तं कालमतिवाहयामास ।

× अथ कदाचिन्महाराजे पुरूरवसि सिंहासनमास्थाय राज्यकार्याण्यनुतिष्ठति सति दौवारिकः प्रविश्य साष्टांगपातं प्रणम्य "देव च्यवनाश्रमात्काचित्तापसी कुमारं गृहीत्वा संप्राप्ता देवन्द्रष्टुमिच्छति" इति निवेदयामास ।

तदाकर्ण्य नृपतिरपि "उभावप्यविलंबितं प्रवेशय" इति तमाज्ञापयामास ।

अनन्तरं दौवारिकः "यदाज्ञापयति देवः" इति वाचमुदीर्य बहिर्निर्गम्य तापसीसहितं कुमारं राजसविधं प्रापयामास ।

राजापि तापसीमुदीक्ष्य सत्वरमुत्थाय कानि चित्पदानि प्रत्युद्गम्य सादरं ववन्दे ।

तापसी च "महाराज सोमवंशं धारयन् भव" इत्याशिषममुष्मै प्रयुज्य "जात प्रणम गुरुं" इति कुमारमादिदेश ।

कुमारोऽप्यञ्जलिं बध्वा राजानं प्रणनाम ।

राजापि "वत्सायुष्मान् भव" इत्याशिषा तमभिनन्द्य "भगवति किमागमनप्रयोजनं" इति तापसीमनुयुयुजे ।

तापसी च "शृणु राजन् एष दीर्घायुरायुर्नाम भवतः कुमारः जातमात्रएवोर्वश्या किमपि निमित्तमपेक्ष्य मम हस्ते न्यासीकृतः । यदस्य क्षत्रकुलोद्भवस्य जातकर्मादिकं तत्सर्वं तत्रभवता च्यवनेन समनुष्ठितं । गृहीतसकलविद्योऽयं धनुर्वेदे च सम्यग्विनीतः। अद्य पुष्पसमित्कुशनिमित्तमृषिकुमारैस्सह गतेनानेनाश्रमवासविरुद्धमाचरितं । यदनेन गृहीतामिषः किल गृध्रः कश्चिदाश्रमपादपशिखरे निलीयमानो बाणस्य लक्ष्यतामनीयत । ततो विदितवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा "निर्यातयैनमुर्वशीहस्ते न्यासं" इति । तदुर्वशीं प्रेक्षितुमिच्छामि" इत्युवाच ।

तदाकर्ण्य राजा तापसीमासनार्घ्यादिना संपूज्य कुमारं गाढमाश्लिष्य "आहूयतामन्तःपुरादुर्वशी" इति परिजनमाज्ञाप्य अमितं प्रमोदमापद्य सिंहासने समुपविश्य कुमारमंकमारोप्य मूर्धन्युपाघ्राय तस्य शिखण्डकं कराभ्यामामृशन्नवर्तत ।

परिजननिवेदितवृत्तान्ता द्रुतमुर्वशी शुद्धान्तादागत्य तापसीं कुमारञ्च विलोक्य "अहो सत्यवती किलेयं यस्यां मम पुत्रको न्यासीकृतः । अयं किल दीर्घायुरायुः योऽद्य महान्दृश्यते । इत्युदीरयन्ती तापसीमुपगम्य तां प्रणम्य "भर्तुरभिमता भव" इति तया सम्यगाशिषानुमोदिता "जात मातरं वन्दस्व" इति पित्राऽनुशिष्ट

सत्वरं पितुरुत्संगादवरुह्य प्रणमन्तं पुत्रकमालिंग्य "वत्स पितरमाराधयन् भव" इति तस्मै प्रयुज्याशिषं राज्ञा च "स्वागतं पुत्रवत्यै" इत्युपचरिता यथोचितमासनमाससाद।

तापसी च "वत्से गृहीतविद्यः आयुस्सांप्रतं कवचार्हस्संवृत्तः। एष भर्तुस्समक्षं निर्यातितस्सखीहस्तनिक्षेपः। तद्युष्माभिर्विसर्जितमात्मानमिच्छामि। उपरुध्यते मे पुनराश्रमधर्मः" इति समुदीरितवचना सादरमुर्वश्या राज्ञा च समनुज्ञाता कुमारेण तद्विरहमसंहमानेन कथं कथमपि विसृष्टा "स्वस्ति भवतु युष्मभ्यं" इत्युक्त्वा ततो निष्क्रम्य च्यवनाश्रमञ्जगाम।

राजाप्युर्वशीमालोक्य "अयि कल्याणि शचीसंभवेन जयन्तेन पुरन्दर इव त्वत्सञ्जातेन अनेन दीर्घायुषा आयुषा पुत्रिणामग्रेसरोऽस्मि संवृत्तः" इति वाचमुवाच।

उर्वशी च तद्वाक्यमाकर्ण्य संस्मृतपुरन्दराज्ञा रुरोद। राज्ञा च "अयि सुन्दरि किमानन्दसमये रोदिषि। किं रोदने निमित्तं" इत्यापृष्टा परिमृष्टबाष्पा पुनरित्थञ्जगाद "शृणु महाराज अनेन पुत्रमुखदर्शनेन प्रथमं विस्मृतः पुनरिदानीं पुरन्दरसंकीर्तनेन स्मृतिपथमुपगतस्स समयो मम हृदयमायासयति। अहं पुरा महाराजसंक्रान्तहृदया महेन्द्रेणाज्ञप्ता "यदा महाराजो मम विजयसहायस्त्वयि समुत्पन्नस्य पुत्रस्य मुखं द्रक्ष्यति। तदा त्वया भूयोऽपि मम समीपमागन्तव्यं", इति। ततो मया महाराजविरहभीतया जातमात्रएव कुमारस्तीर्थाद्विद्याधिगमनिमित्तं भगवतश्च्यवनस्याश्रमे तत्रभवत्यास्सत्यवत्या हस्तेऽप्रकाशं निक्षिप्तः। अद्य पितुराराधनसमर्थस्संवृत्त इति कलयन्त्या तया आनीत एष दीर्घायुरायुः। एतावानेव मे महाराजेन सह संवासः" इति।

राजापि तद्वाक्यमाकर्ण्य परं विषादमासाद्य दीर्घमुष्णञ्च निश्वस्य "साम्प्रतम्मयापि पुत्रे राज्यधुरान्निक्षिप्य वल्कलं गृहीत्वा

तपोवनं गन्तव्यं" इति वाचमुवाच "संभ्रियतां कुमारस्य राज्याभिषेकसंभारः" इति सेवकजनानादिदेश । एतस्मिन्नवसरे महेन्द्रलोकात्त्वरितमागतवन्तं भगवन्तं नारदमहर्षिमालोक्य सिंहासनादुत्थाय स्वागतार्घ्यासनादिना तमभिपूज्य सममुर्वशीकुमाराभ्यां सादरमभिवन्द्य विष्टरे समुपविष्टेन समीरितानुगुणाशिषा तेन देवर्षिणा समाज्ञप्तो भद्रासनं भेजे ।

नारदोऽपि " राजन् प्रभावदर्शी महेन्द्रो वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति । त्रिकालवेदिभिर्मुनिभिरादिष्टं "सुरासुरविमर्दो भावी" इति । भवांश्च नस्संयुगे सहायः । तत्त्वया न शस्त्रं त्याज्यम् । इयञ्चोर्वशी यावदायुस्तव सहधर्मचारिणी भवतु" इति मघोनश्शासनमुवाच । तदानीम्महेन्द्रप्रहिताभीरंभाचित्रलेखादिभिरप्सरोभिरुपनीतान् कुमारयौवराज्याभिषेकसंभारानालोक्य कुमारमायुषं रत्नमये भद्रपीठे समुपवेश्य यथाविधि रत्नकलशावर्जितेन मन्त्राभिमंत्रितेन व्योमगंगावारिणा स्वयमेव सानन्दमभिषिषेच । नवरत्नखचितं किरीटमपि तस्य शिरसि योजयामास । तदनु सकुमाराभ्यामुर्वशीपुरूरवोभ्यां सभाजितस्सह रम्भादिभिस्त्रिविष्टपञ्जगाम ।

अनन्तरमात्मजस्य यौवराज्यश्रिया भर्तुरविरहेण च परामभिवृद्धिमधिगतया प्रियतमया सममुर्वश्या दुरवापमकृतसुकृतैरिहैव स्वर्गसुखमनुभवन्महीपतिरात्मजेन सह भुवनभरणधुरीणेन भुवन्दिवमप्यक्लेशेन परिपालयन्नुत्पादयामास मर्त्यानाममर्त्यानाञ्च सततन्निरर्गळम्मंगळम् ॥—॥

वन्दारुपारिजातं बृन्दारकनुतममन्दगुणजातम् ।
सुन्दरमुखारविन्दं नन्दतनूजं नमामि गोविन्दम् ॥

**इति श्वेतारण्यनारायणशर्मणा रचिते गद्यकाव्ये मिश्रं**
**उर्वशीपुरूरवश्चरित्रं समाप्तिमगमत् ॥**

---

## ॥ सुकुमारवर्मचरितम् ॥



वन्दे वाञ्छितसिध्यै विनतानन्दननिकेतनं वरदम् ।
यत्करुणालवकणिका मूकङ्कुरुते गिरामधीशानम् ॥

एकस्साक्षी न प्रमाणं जायते सुमहानपि ।
यथा राजा कीशगीते यथा मन्त्री शिलाप्लवे ॥

आसीदास्तिकाग्रेसरस्सुकुमारो नाम नरपतिशेखरः । यस्तावत्कलिङ्गेषु कालिङ्गनामधेयन्नगरमतिरमणीयमध्यतिष्ठत् । यमाश्रित्य सुलळितनामा सचिववर्यः कुलक्रमागतां हृद्यां नीतिविद्यां कृतार्थयामास । येनैव धनुर्मात्रसहायेन सकले महीमण्डले महोन्नतयस्समस्तसामन्तमहीपतयो व्यजीयन्त । यस्मै स्पृहयामास विशङ्कटे पुण्डरीकाक्षवक्षस्तटे सततसंवासरसिकाऽपि प्रभूतप्रभावा पारावारतनूभवा । यस्माद्भीताभिरशरण्याभिररण्यानीमुपेताभिररिवनिताभिरभक्ष्यन्त बालानि तृणानि । यस्य परलोकाद्भीतस्यापि नोदपादि भीतिरतुलानीकादरिलोकात् । यस्मिंश्च विपश्चिदपश्चिमे शासितामित्रे भूभृति शासति शास्त्रानुसारेण क्षितितलमखिलम् । मित्रपराभवस्तारेषु न वीरेषु । दोषाकरत्वं द्विजराजेऽपि न द्विजेषु । पातित्यं जरठद्विजेष्वपि न वृद्धधरणीसुरेषु । दुरोदरव्यवहारश्शकुनिचरितेष्वेव न प्रकृतिनिवहेषु । अतितरां रतिलौल्यं शंबराराताविव न वर्णाश्रमधर्मनिरतेषु समजनि ।

स कदाचित्सुकुमारवर्मा परिगृहीतमृगयासाधनः सह मन्त्रिणा विरचयितुं विपुलविनोदोदयाम्मृगयाम् । विदलयितुमतिभीषणान्मृ-

गगणान् । विशदयितुमतुलं बाहुबलमनतिदूरमरण्यमयासीत् । तत्र च दिगन्तविश्रान्तकीर्ती रतिकान्तशतकान्तमूर्ती दस्राविव सुकुमारौ सुललितसुकुमारौ गाहंगाहमितस्ततः । ग्राहंग्राहं गरीयसी धनुषी । रोपंरोपमितरदुरारोपान्रोपान् । कर्षंकर्षमाकर्णाभ्यर्णं । उद्दिश्य हर्यक्षतरक्षुप्रभृतीन् भयंकरनादान् श्वापदान् । प्रक्षिप्य त्यक्तविलंबान् कलंबान् । आविध्य च तैस्तदीयानि भीकराणि कलेबराणि । आख्याप्य निजभुजजातं यशोजातं । श्रान्तौ वनात्प्रत्यावर्तमानौ निकषा निजनगरीं कस्याश्चिदमलजलाया विशालायास्सुरतरंगिणीसब्रह्मचारिण्यास्तरंगिण्यास्तटनिकटमासेदतुः ।

आसाद्य च तत्तीरमारूढवानीरं । आश्रित्य च तत्र कञ्चिदकिञ्चनीकृतपारिजातमवनीजातं । उपविश्य कस्याञ्चिदमलायां शिलायां । कञ्चित्कालमपापेन परस्परविनोदालापेन विशश्रमतुः ।

तदानीमतिदवीयसि तदीयपाथसि विचित्रतरं प्लवमानमतिप्रथिमानं मैनाकनामानमिव शिखरिणं कञ्चन ग्रावाणममात्यः केवलमालोक्य राजानमुवाच "अहो वयस्य पश्यपश्य नाद्राक्षमेतावन्तं कालं । नाश्रौषं यस्य कस्य चिन्मुखात् । नाभीगणञ्च मनसाऽपि कदाचित् । इतोऽतिदूरे पुरतो बंभ्रमीति प्रस्तरोऽतिविस्तारः । तमुदीक्ष्य त्वरितमनुभव नेत्रानन्दममन्दं" इति ।

राजापि सुललितवचनमाकर्ण्य तदद्भुतमालोकितुं प्राहिणोदात्मीयमक्षिद्वितयम् ।

यावन्न निध्यायति जलान्तरालं क्षितिपतिस्तावदसावपि शिला शतक्रतुभीत्येव शिलोच्चयस्तदन्तरेव निममज्ज ।

तदनु भूपतिरपि । अनालोक्य तां शिलां । अवधार्य विडंबनानीचाममात्यवाचां । अधिक्षिप्य च "दुर्ललितो भवानविश्वसनीयः" इति कोपावेशेन तं सुललितं। उदीर्य च तदानीमेव "सचिवहतक-

नेतः परमनर्हस्त्वमवञ्चनास्पदमस्मदमात्यपदमधिरोढुं" इति । उत्सृज्य च तमनुकूलमपि प्रतिकूलमिव । विचिन्तयन् पदेपदे तदीयविडंबनां विमृशन्ननाकर्णितपूर्वस्य तद्वचनस्य कारणं । विषीदंश्च 'पुनरप्येतादृक्षं कथं लभेय मन्त्रिहर्यक्षं' इति मत्वा । स्वयमेकाकी ग्रहग्रस्तइव भूताविष्टइव जाड्यावृतइव इतिकर्तव्यतामविजानन् तत्तीरादतिकृच्छ्रेण पत्तनमात्मनीनमाययौ ।

आगत्य च महीपतिरावेदितनिखिलप्रवृत्तिः पौरवृद्धेभ्यः । आलोच्य च सुचिरं स्वीयया धिया । दुर्विलंघतया भवितव्यतायाः । मुमोचैव सचिवं वंशपारंपर्यागतमपि सुललितं । तदनन्तरं तत्तादृशमहिमानमप्राप्यैव मन्त्रिकेसरिणमुभयमप्यधिकारमात्मनैव समनुष्ठातुं प्रववृते ।

परित्यक्तस्तु मन्त्रिग्रामणीरत्यासक्तिमेदुरेणापि मेदिनीपतिवीरेण विरक्तइव सन्त्यक्तसदनादिसर्वस्वः काननात्काननमटन् दिनेदिने दुस्तरेण विचारेण श्राम्यन् नियतिमनतिलंघ्यामाशंकमानः कञ्चन तत्प्रतीकारप्रकारं गवेषमाणः काञ्चित् किष्किन्धागुहामिव वानरवरसनाथां आयोधनधरणीमिव बाणासननिबिडां प्रमथाधिपपाणिस्थलीमिव मृगवरपरिशोभितां वासरसंपदमिव विहङ्गपरिबृंहितां अलंकरिष्णुं कुंभसंभवककुभं निराकरिष्णुं नन्दनचैत्ररथसंपदं प्रविशदसरोवरोपेतां प्रभूतमहीरुहवितताम् विचित्रारण्यनाम्नीं महावनीं विवेश ।

तस्याञ्च तन्वानस्ततश्चेतश्च पर्यटनं । वसानस्तारवीं त्वचमेव परिधानं । भुञ्जानः पचेलिमानि कन्दमूलफलानि । शयानस्सुन्दरकन्दरएव मन्दिरे । कुर्वाणस्तापसपरिचर्यां । स्तुवानो गहननिवासिसुखचर्यां प्रेक्षमाणस्स्थलरामणीयकं । शिक्षमाणो मयूरपिकशुककूजितानि ।

सहमानश्शीतवातातपक्लेशजातानि । वेपमानस्संस्मृत्य सौकुमारं धिक्कारं । चिन्तयमानस्तत्प्रतीकारं । महीयांसमनेहसं गमयामास ।

स कदाचिद्विपुलतरविटपिविवरनिबिडान्तराले वनान्तराले कस्यचिदच्छाच्छपानीयस्य कमनीयकमलकुशेशयस्य प्रकामविनिर्जिताच्छोदस्य कोमलकूजितधवलच्छदषण्डस्य तटाकप्रकाण्डस्य तटभुवि । शीतलिते मारुतपोतसंबाहितैर्जलपृषतैः । परिमलिते पतत्रिकंपितपादपपतितैः प्रसूनजातैः । मूले नमेरुतरोः । आस्तीर्य कोमलानि प्रवालदलानि । आसाद्य तदन्तरासिकामभीकां । आघ्राय सुरभितमानि कुसुमानि । आसेव्य दाक्षिणं समीरणं । आलोक्य विमलानि जलानि । आकर्ण्य कर्णमधुरांश्चञ्चरीकझंकारान् । अनुभूय वामेतरबाहास्फुरणं । अनुचिन्त्य 'किमेतस्य फलं भविष्यति' इति परितस्सरस्तटमक्षियुगं विन्यस्यन् नातिदूरे कस्य चिद्विशालस्य रसालस्याधस्तनं स्थानमेव नटनांकणमलंकुर्वाणं अतिमनोहरामनितरासाद्यामभिनयविद्यामभ्यस्यन्तं मार्कटिकसदस्यसमीक्ष्यमाणसर्वांगोपाङ्गसौष्ठवं बलीमुखसंघन्ददर्श ।

तदनु सञ्जातसन्तोषस्सचिववृषः समुत्थाय बिसमृदुलतरातिकसलयविष्टरात् समाधाय मानसं सुकुमारकलितावमानशोकविरसं समाहृत्य चक्षुषी सर्वतस्सञ्चारं समुपेयुषी सानन्दमाम्रविटपिनिकटतटमाससाद ।

तत्र खलु रंगभंगीमापन्ने चूताभ्यर्णे कस्य चिन्नटपदवीमधिरूढस्य पुरस्तात् कीशेषु केचिद्गायकतां केचन मौरजिकत्वं अपरे वैणिकभावं इतरे वांशिकतां परे घटवादकतां अन्ये काहलीमुखरतां त्वे सम्यगभिनयकलापारीणतां प्रकटयामासुः ।

अथ समधिगतलोचनसौख्यस्सचिवमुख्यः "स्वप्नविशेषोवैष आहोस्विदैन्द्रजालिकविभूतिरीतिरियं उत मायाविचरितमिदं किंस्विद्ध

वनानन्दनाय नूतननिर्मिता विधातृसृष्टिरसौ" इति विविधविचिकित्सा-डोलारूढस्तारेण स्वरेण शैलूषशार्दूलं सानन्दमित्थमप्राक्षीत् "अहो सुशिक्षकचक्रवर्तिन् को भवाननङ्ग इव साङ्गः । श्रृङ्गारइव स्वीकृत-शरीरः । अश्विदेवतैवैकतां गता । अखण्डपुण्यजातमिव पिण्डीभूतं । स्वीकृतोपाधिरिव परमोऽवधिरनल्पशिल्परचनाप्रपञ्चस्य वैरिञ्चस्य । वर्तसे कवीनां त्वमगोचरे मनसां । नन्दयसे हृदयमस्मदीयं । कृतार्थ-यसे दृष्टियुगमिदं । विराजयसे चूतमहीजातसविधं । अथवा रोधस्स-रसः । उतवा वनस्थलीमिमां । अपिवा दक्षिणान्दिशं । आहो पृथ्वी-मण्डलं । किं बहुना भुवनानान्त्रितयं । कोवा वर्णस्समुदयेन भवदीयेन जगाम जगत्पवित्रतां । वर्णेषु केके वर्णास्त्वदीयनामधेयवाचकता-मवलंब्य पुण्यपरीवाहमितरदुरवगाहमवापुः । कुत्र वर्तमानाञ्जनान् भवद्वियोगसमुत्था बाधा भृशं बाधते । किमर्थमरण्यसञ्चारक्लेशसार्थ-मवलंबसे । भवता कुतस्तीर्थादभिनयादिविद्यास्समासादिषत । एते वनौकसः कुत्रत्यास्स्वभावचञ्चलमनसस्समग्राहिषत । कथमेनान् बहु-विधासु तौर्यत्रिकविद्यासु नैपुण्यमगण्यमनैषीः । न परमिदं यदि भवेद्गोपनीयं । नैवैतत्प्रकटनेन स्याच्चेत्किमपि गर्हणीयं । नाप्यस्य कथनेन स्वस्य परस्य वा किमपि जायेतानाशासनीयं । भवानप्या-कस्मिकमारण्यकम्मित्रं यदि मां न मन्येताविश्वसनीयं । मामकीने श्रवणे महान्तमपि तावकमुदन्तं शुश्रूषेते" इति ।

तदाकर्ण्य तदा शबरपतिरनालोकितपूर्वं कलितकाननचर्यमिव सुपर्वाचार्यं तं सचिववर्यं सन्त्यक्तनिमेषं साश्चर्यविशेषं समीक्ष्य स्मयमानवदनांबुजो निजवृत्तान्तिजगाद "भो भद्रमुख न गोप्यं विद्यते किमपि । नास्ति च विनिन्द्यवार्ता काचिदपि । नैवास्तेऽनाशास्यगन्धः कश्चिदपि । भवानपि मम बिभूतसख्यं साप्तपदीनं विश्वस्यापि विश्वस्यम-वभासते । अतिलघिष्ठमतिक्षेपिष्ठञ्चास्माकीनमप्यावेदनं । शृणु तावत्कि-ञ्चित्क्षणमवधाय मानसं सोल्लासं । नाहं भवामि कठिनदर्पो कन्दर्पः । नैव

जाने रसमादिमं । नापि वेद्मि नासत्यौ । नैवास्चयमीषदपि शरण्यं पुण्यं । नैव वेद प्राजापत्यं कृत्यं । अहमाजानविघ्ननामधेयश्शबरजातीयः । अस्मादेव तटाकादेतद्वयस्क एव सहैतैर्वानरकुलैरुदभवं । मम चामीषाञ्च गानाभिनयादिकलास्वाजानासिद्धैव वावदूकता । जन्मनः प्रभृत्यत्रैव सरस्तीरे निवसन्नस्मिन्नेव रसालमूले कृतार्थयन्नेषां विचित्राभिनयविलोकनेन विणाद्यातोद्यवादनसमाकर्णनेन नेत्रयुगं श्रोत्रयुग्मञ्च । नेदमनुकूलन्तरुतलञ्जिहासामि । न परमास्थानञ्जिगमिषामि । न कदाप्यनुदयादाहारस्पृहायाः फलमपि जिहीर्षामि । न तृषाभावात्पाथांसि पिपासामि । न केवलमेतन्मम नैरपेक्ष्यमशनादिषु किन्तु सहचारिणां सर्वेषामेतेषामपि । न कोप्यवगतवानत्र वसतिमस्माकं विना भवन्तं समयमेतावन्तं । नाहमभाषिषि यं कञ्चन पञ्चजनं । संप्रति भवद्दर्शनेन मनो मदीयमा मग्नमिव पीयूषपूरे । आलग्नमिव सिद्धरसायनान्तरे" इति ब्रुवाण एव शबरधूरीणः केवलन्तिरोदधे ।

तत्क्षणमाक्षिप्त इव नयनद्वंद्वात् । प्रक्षिप्त इव महानन्दप्रासादात् । अभिक्षिप्त इव महाराजमहाधिकारात् । प्रक्षीण इव महाराजयक्ष्मणा । संक्षिप्त इव शोकपारावारान्तराले । बोधविनिर्जितबुधोऽपि सचिवकुञ्जरः किमपि नाबोधि ।

कीशगणश्च तदानीमनालोक्य शबरपतिं यूथपरिभ्रष्टइव कृष्णसारः जननीविरहितइव किशोरः कबन्धविरलइव कासारः सेनानीविनिर्मुक्तेव चमूः राजरहितेव राजधानी त्यागभोगविहीनमिव धनं अनधिगतवृष्टिरिव कलममञ्जरी आम्नानवियुक्तेवाम्नायविद्या नैव राजते स्म स्वयं । नापिच रञ्जयते स्म परकीयं हृदयम् ।

तेषु मर्कटेषु ये पुरा मधुरतरमगायन् ते तदानीं सकरुणमरुवन् । ये साभिप्रायमनृत्यन् ते समधिगतांगभंगसमतामाप्नुवन् ।

ये तावदतिरमणीयं शंखमधमन् ते विषादेन विस्मृतशंखाः करयुगळतः कंबुगळनमपि नाविदुः । ये प्रवीणतरं वीणामवीणयन् ते पुनरपार करुणभरेण काष्ठवाहकतामुद्वहन् । ये विचित्राणि मृदंगादिवादित्राणि मनोज्ञमवादयन् ते त्वकाण्डमूकप्रकाण्डभावमभजन् । ये पूर्वमानन्द-पारवश्येन प्रतिकृतिप्रकृतिमवहन् ते तदा बहुव्यामोहेन व्यसनपरीवाहेण न तां व्यसृजन् ।

एतादृशविस्मये तस्याजानविद्यस्यान्तर्धानसमये । दुःसहदुःखेषु शाखामृगसंघेषु सकलेषु व्यामोहाकुलेषु । सुलळिते च भृशपीडिते । काचन गंभीरस्वरा गगनांकणादशरीरिणी वाणी समुदजृंभत —"भोभोस्सुलळितशर्मन्मन्त्रिकेसरिन् मा मोहं लब्धाः । मा च शोके मनः कृथाः । मानसञ्च तनु सावधानं । मामकीनञ्च शृणु मधुरवचनं । —पुरा किल सुरासुरमकुटतटघटितनवरत्ननिर्यन्निस्सरन्मरीचिनिचयनीराजितचरणसारसद्वितये हरिहये बृहस्पतिना महामतिना निखिलैरमरमुनिकुलैः अमितैश्च निर्जरपुरप्रवरैः अधिष्ठितायां समापतत्कर्मठकार्मायां सुधर्मायां सिंहासनमासेदुषि । दर्शयितुमनाविलन्निजकलाकौशलम् । नन्दयितुं शतमुखप्रमुखान् लेखान् । अर्जयितुममलं यशःपुञ्जं । अभिनयादिषु कलासु वरिष्ठाभिः सौन्दर्यादिषु गुणगणेषु महिष्ठाभिस्साकमुर्वशीप्रभृतिभिरप्सरस्ततिभिः आचार्यो भरतानां मूलकारणमभिनयविद्यायाः केळिभवनं विविधविनोदनप्रसाधनस्य सन्तोषयिता शतक्रतोः आजगाम भरताभिख्यो मुनिमुख्यः ।

आगत्य स मुनिवरः सभास्तारान्विबुधवीरान्विचित्रयितुं "सुरदेशिक' इत्यामन्त्रयितव्यममर्त्यगुरुं 'कान्त' इत्यामन्त्रयामास ।

तदनु सुरवारनार्योऽपि समनुसृत्यैवाचार्यभङ्गीं आखण्डलमामन्त्रयितुं 'सुरेश', इति प्रयोक्तव्यतामालोच्य 'शान्त' इति शब्दं प्रायुञ्जत ।

अथ साटोपप्रवृत्तां 'शिष्याचार्याणां त्रिदशवेश्याभरतार्याणामामन्त्रणामाकर्ण्य दुर्दान्तरोषौ दण्डबद्धिताविवाशीविषौ शचीपतिबृहस्पती शान्तकान्तशब्दयोर्बहुव्रीहिवशात्सुरेशसुरदेशिकपदाभिधेयतामवगम्यापि तश्च ताश्च शापपात्रतामनयतां ।

तदानीमाचार्यमाचार्यः प्रथममभाणीत् "अहो दुर्विदग्ध विदग्धम्मन्य शैलूषहतक । सुबोधायामबाधायां सत्यां शब्दपद्धत्यां 'काको वा घूको वा लुब्धको वा वृक्षको वा सुरदेशिको वा' इत्युरुतरसन्दिग्धार्थकं 'कान्त' इति पदं यतः प्रयुक्तवानसि । ततस्त्वमतिकठिनहृदयतया गायकवञ्चकतया च साम्यंशेन प्रस्तरतां अर्धभागेन च लुब्धकतामधिगच्छेः" इति ।

पुरुहूतश्च गुरुशापानुरूपमवादीदप्सरसः "भोः प्रकृष्टदौर्जन्याः प्रौढम्मन्याः भरतशिष्याः वेश्याः यूयमपि अनार्यस्याचार्यस्य दुराचारमूरीकृत्य 'बालिशो वा कीशो वा नरेशो वा सुरेशो वा' इति प्रचुरसंशयजनकं 'शान्त' इति शब्दं प्रयुक्तवत्यः । ततश्चञ्चलप्रकृतितया कीशाः भुवि भवेत" इति ।

अनन्तरमभिशापग्रस्तास्सच ताश्च विहस्तचित्ताः प्रणम्य सुरपतिबृहस्पती स्तुतिभिरमिताभिः प्रसादयामासुः ।

तदीयाभिः स्तुतिपरंपराभिः सुमुखीकृतौ धिषणमघवानौ तञ्च ताश्च चब्यतुः "अहो मुने सशिष्य नास्माकं वाणी कदाचिदपि अनृता जाता । अतः पृथिवीतले वारिणि यत्र कुत्र चित्कञ्चित्कालं प्लवमानशिलाशैलीमवलंब्य वर्तिष्यसे। शाबरेण रूपेण तु विचित्रारण्ये युगपदमूभिरप्सरोभिरप्सरस्तीर्थादुत्पद्य तत्तटनिकटविशंकटस्य चूतविटपिनो मूलमास्थाय । विद्यामनभ्याससिद्धामभिनयादिसमिद्धामासाद्य । आत्मनैवात्मानमाजानविद्यनामानमाख्याय । वानररूपधारिणीभिराजानविद्याभिरनवद्याभिरिमाभिर्निर्जरवाररमणीभिस्सहासिकामासे-

व्या ह्वद्येन पुनरासामातोद्यादिप्रसंगेन विनोद्यमानो द्राघीयांसमनेहसमना-यासेने नेष्यसि" इति ।

अथ 'तापकार्येव मिहिरस्तापहारी' इति रीतिमनुसृत्य शापदायिनावेव शापविमोचनप्रसितौ पृथक्पृथगभवताम् ।

प्रथमतः प्रवक्ति स्म चित्रयुक्तिकुशलश्चित्रशिखण्डिजः भरत-मनुनयभरितं शापविमोचिकां वचोफक्किकां "अहो नाट्याचार्य यदा पुनरमात्यस्सुषमाजितमारस्य सुकुमारस्य प्रतिभया मत्सन्निभस्सुललितः विगाह्य विचित्रारण्यं । विलोक्य विमलमप्सरस्तीर्थं । प्रविश्य रसालमूलतलं । निशाम्य मर्कटनटनम् । प्रभूतप्रमोदः प्रक्ष्यति भवन्तं कुशलोदन्तं । तदा तस्मै प्रतिपादयन्नेव प्रत्युत्तरं अन्तर्धास्यसि सह शरीरमात्रेण । हास्यसि यत्र क्वचन पाथसि शाबरं शरीरम् । स्मरिष्यसि 'पूर्वमप्येतस्य सचिवस्यावलोकनेनैव व्यमोचिषि ग्राव-भावतः' इति । अवाप्स्यसि संपूर्णां स्वीयाममरादरणीयान्तनुम् । आयास्यसि पुनर्नाकमिमं लोकं" इति ।

तदनन्तरं पाकशासनोऽपि वेशांगनाअपि सान्द्रतरकरुणाव-शात्समशात् "भोभोस्तरुण्यो मन्मनोरमण्यो यदा किल विहाय युष्मान् शाखामृगीभूतास्समस्तास्तिरोभविष्यत्याज्ञानविद्यः । सुललितं परितः स्थास्यथ मन्यमानाइव तच्चरणमेव शरणं । इतिकर्तव्यतां प्रति यथामति सुचिरमसौ मन्त्रिवृषभश्चिन्तयिष्यति । विज्ञास्यति सातिशयं कमप्यात्मापेक्षितसाधनोपायं । प्रापयिष्यति तत्क्षणं भवतीः कलिंगपत्तनम् । दर्शयिष्यति सुकुमारनामानं मत्समानमेकान्ते कि-मप्यालोचमानं राजानम् । नर्तयिष्यति सहभावं । गापयिष्यति सानुरागम् । ध्मापयिष्यति शंखान् । वादयिष्यति वाद्यानि तत्पुर-स्तादन्यानि मान्यानि । विस्मापयिष्यते विश्वंभरापतिं युष्मदीयेन शिल्पेन । प्राप्स्यथ तदा यूयं निलयमाश्चर्याणां आलयममृतान्धसां

लीलासदनमनेकसप्ततन्तुयाजिनामधरीकृतसकलविष्टपं त्रिविष्टपं" इति ।

भोभोस्सचिवसत्तम संप्रति प्रत्येतव्यामितिकर्तव्यतामवगच्छ । भरतमुनिरयं निर्जरतरंगिण्यास्तापहारिणि वारिणि शाबरं शरीरं परित्यज्य । पुनरपि स्वीयं कायं स्वीकृत्य । अप्राकृतेन शोभाभरेण शोभमानः । वियति विराजमाने विमाने दीप्यमानः । सततसञ्चारिणा चारणनिकरेण सेव्यमानस्साधुजनभूयिष्ठमखिलश्रेष्ठं त्रिदशालयं साधयति ।

उन्मोचय तावदमूरमपि पापादिव शापात् । प्रापय सविधमाचार्यस्य । न विद्यते गतिरितरा विना भवन्तमेतासाम् । न जानते किमप्येताः कृतमकृतञ्च । न वर्तन्ते न केवलमवलंब्य सालभञ्जिकाभंगीं । नावबुध्यन्ते किञ्च प्रभावमप्यात्मीयं । संस्पृश्य काननौकसाममीषां एकतमं मनुजो योवा कोवा मनुते यद्वा तद्वा तदभिलषितमतित्वरितं संपद्यते ।

अपिच कुमारसदृशस्सुकुमारोऽपि विधूय भवन्तं प्रतिभावन्तं । विमुह्यन्विचारेण दुस्तरेण विषीदन्वियोगेन तावकेन क्लिश्यमानो भृशमधिकारद्वितयसमुद्वहनेन । न स्वपिति नक्तं । न स्नाति नमालिन्यं । नाश्नाति भोज्यमुच्चावचं । न परिधत्ते पीतांबरम् । नादत्ते पारितोषिकम् । नच धत्ते भूषणम् । न निविशते विद्वद्गोष्ठीषु । नेक्षते प्रेक्षणीयं । न शृणोति श्रवणीयं । न जिघ्रति घ्रातव्यं । न पिबति पातव्यं । न स्पृशति स्प्रष्टव्यम् । किं बहुना न दिदृक्षते पाणिगृहीतीमपि । किन्तु रात्रिन्दिवमुत्तरेण राजधानीं । धिक्कृततपोवने कस्मिंश्चिदुपवने । नूतननिर्मिते निवसन्नुदवसिते । नियमयन्नागमनमाधिकारिकाणाम् । निर्मनुष्यप्रायं यापयति दिनान्यमूनि । ततो यतस्व साधयितुं प्रज्ञया परकीयमात्मीयञ्च कार्यं" इत्यखिलगुणशस्यं वयस्यमिव सचिवपञ्चास्यं संशास्य वियद्गीरभिरामा विरराम ।

अनन्तरमानन्दपूरितस्सुललितः विश्वाभिनन्दनीं विष्णुपद्वाणीं विश्वस्य । विस्रंसयितुमप्सरसामभिशापम् । विश्वासयितुं सुकुमारमवनीशं । विनाशयितुमात्मवियोगंजातन्तदार्तिमातं विदलयितुं मृषारोपितनिजवञ्चनवचनजां तदीयहृदयरुजां । विशदयितुमात्मानन्निरागसं । विशोषयितुमात्मीयबान्धवनिचयशोकाकूपारपूरं । कञ्चन वानरवरमतिसुखस्पर्शं पस्पर्श ।

संस्पृश्य च तं । अनुभूय साक्षादिव रम्भादिसमालिङ्गनं । अधिगत्य सर्वांगेषु रोमाञ्चकञ्चुकानि । विस्मृत्य विषयान्तराणि । नाबुध्यत कञ्चित्कालमात्मानमप्यानन्दपरवशान्तःकरणः । विबुध्य च बहोर्निमेषादात्मानं पुनरेवम्मनस्यचिन्तयत् " आप्नुयामेतस्मिन्नेव मुहूर्ते कलिङ्गान् । अतीयामर्धनिमेषमात्रेण योजनानि षट्शतानि । अवबोधेयमन्तरिक्षे क्षितितले च विलसन्ति तनीयांस्यपि वस्तूनि । नावगच्छेन्मनुजतल्लजः कोऽप्यस्मानुत्प्लवमानान् । न पृच्छेत्कश्चिद्बुध्वापि किमपि गगनचारी चारणगणः । अवतरेयं कलिङ्गेषु सुकुमारपुरम्। पश्येयमुपवने विजने वसन्तमत्रभवन्तं सुकुमारं" इति।

विचिन्त्य चैवम्मन्त्रिवर्यः । विस्मृत्य विपिनविपदम् । विनुत्य स्वेष्टदेवताम् । आर्तिविघर्षणाद्रसालसालाङ्कणादुत्पपात । शाखामृगमिषात्त्रिदशवेशयोषितोऽप्यनूत्पेतु ।

उत्पत्य सच सचिवस्सह ताभिः । विनिर्जित्य रयमपि वैनतेयस्य । विदलय्याशुगइति प्रथां प्रभञ्जनस्य । विगमय्य मानसगमपि वेगम् । गाहमानो वियत्तटम् । आलोकमानो विपिनतलम् । वर्धमानो गुरुतरेण विभवेन। वीक्षमाणो विशालानि भूमण्डलानि। मोदमानो विचित्रेण चारणगीतेन । विस्मयमानो मनोहरेण विहङ्गमविहारेण । भूषयमाणो व्योमरङ्गं । दधानः परितस्सरित्सरोनिर्झरिणीतटाकवापीकूपान् द्वितयं विलोचनयोः। ददानः पिकशुकहंससारसशिखिमुखश-

कुनिकूजितेषु युगलं कर्णयोः । सामिनिमेषमात्रेण स्थानमुद्दिष्टमाययौ । विविक्ते विहारमण्टपे विरक्तमिव वर्तमानम् । विषक्तमिव किमपि चिन्तयमानम् । वियुक्तमिव केनाप्याधिना तप्यमानम् । सुकुमारमपि प्रमाणवृद्धं सुकुमारनामानं प्रियस्निग्धं ददर्श । अवततार पुरो मण्डपस्य । तस्तार मर्कटनटैर्विशङ्कटन्तन्देशम् । चचार समन्ततस्सानन्दं । अनुबभूवान्तर्धानविद्यामपि ।

आलुलोके राजापि न मन्त्रिणं नच वनौकसां गणम् ।

आलुलोचे समनन्तरकार्यं सचिवसारसः "कर्तव्यं किमिदानीं । उद्धर्तव्यं कथमेतदप्सरसां कुलं । हर्तव्यं केनास्य वयस्यस्य दुःखं" इति । तस्यैवं चिन्तयतः किमपि मानसे पुस्फोर "तिरोभूयास्मिन्नेवोद्देशे । पुरोभूयामूषां योषाणाम्, । प्रकटीकरोम्यमूरुपवनरङ्गे तत्रभवतः पृथ्वीभृतः पुरतः । एतासामभिनयादिकौशलं प्रदर्श्य राजानमेनमतितरां मोहयामि । एनाश्च सुरवाराङ्गनाश्शापान्मोचयामि । अवार्यमात्मकार्यञ्च साधयामि" इति ।

---

एवम्मानसस्फुरणवति सचिवे । यथा पुरस्तादङ्गनाविद्यस्य । तथाग्रतस्सुकुमारस्य । सुन्दरमलङ्कारमारचयत् । प्रकाममङ्गोपाङ्गेष्वभिनयचातुरीं प्रकाशयत् । लयभूयिष्ठं पादं विन्यस्यत् । अपाङ्गादिभिस्सात्विकसहचारिभावान् संसूचयत् । आनङ्गचेष्टाभिर्विभावानुभावान् संशोभयत् । रतिहासादिसमुद्भावनेन स्थायिभावान् सञ्जीवयत् । नायिकात्वन्नायकताञ्च समालम्ब्य समुद्द्योतयदालम्बनभावं । भावहावादिप्रकटनेन समुद्दीपयदुद्दीपनानि । संविभजत् कालभेदेन रागभेदान् । संमूर्छयत्स्वरान्तरेषु मूर्छान्तराणि । कन्धरास्वरेण तन्त्रीनिक्वाणाननुसरत् । करांगुलिभिर्वीणावीणनान्तन्वानम् । पाणितलद्वयेन मुरजतल्लजं ताडयमानं । मुखमारुतेन मुरलीमतल्लीं पूरयमाणम् । झलझलायमानकांस्यं भमभमायमानशंखं घटघटायमानघटं

अवाङ्मनसगोचरं अपरवादित्रनिकरमुखरमानन्दतुन्दिलममन्दमरण्यौकसां बृन्दमाविरासीत् ।

आविर्भूय ते कीशास्सुकुमारमीक्षाञ्चक्रिरे । महानन्दसागरे मग्नाइव नितान्तमेजाञ्चक्रिरे । क्षणमञ्जलिपुटमाधाय स्वोत्तमाङ्गे ष्वासाञ्चक्रिरे । यथास्थानं यथाचारं यथापङ्क्ति यथास्वस्वाशिल्पमवतस्थिरे अनल्पानि च स्वीयानि शिल्पान्याविष्कर्तुमारेभिरे ।

मुरजमार्जनया मौरजिकास्सम्राजस्सुकुमारस्य मानसरुजाम्ममार्जुः । गीतिरसायनेन गायकास्सुललितविनोदकथानाकर्णनसमुद्भूतां तत्कर्णयुगविधुरतामपजह्नुः । अभिनेतारस्साकूताभिनयसिद्धाञ्जनेन सचिवानालोकनतस्सरोगं तल्लोचनयुगमानञ्जुः । तन्त्रीवादकास्तन्त्रीसमुत्थेन सचमत्कारेण निषाधादिस्वरपरिष्कारेण सचिवविरहसंकटसमुदितां तद्गलरवगद्गदतां बभञ्जुः । इतरे शिल्पिनश्शिल्पान्तरैस्तदिन्द्रियाणामपाटवं पिपिषुः ।

सुकुमारस्तु नरपतिः आलोक्य कीशकुलमक्षिभ्याम् । आकर्ण्य तत्कोलाहलमपि श्रवोभ्यां । आनन्द्य तद्गानादिकम्मनसा । आमग्नइवामृतधारापूरे । आसीनइव घनसारमण्डपमध्ये । आलिप्तइव मलयजधारासारैः । आलिंगन्निव स्फाटिकसालभञ्जिकाम् । आतिष्ठन्निव तुहिनवालुकाराश्यन्तरं । आवसन्निव राकाशशांकोदरं । आसीदन्निव चन्द्रकान्तशिलाकुक्षिम् । आप्रपदादाच कचपदाच्छीतलितः । पुलकवारबाणैरसाधारणैः कवचितः । प्रमोदपूरैरपारैः परिपूरितः "पुरन्दरो वा पुण्यजनेश्वरो वाऽहमधुना । अमरावती किमलकापुरी किमियमुपवनस्थली संप्रति । सुधर्मा वा वैश्रवणसभा वा सांप्रतमेषा मण्डपिका । अप्सरसः किं किन्नराः किमेते कीशाः । मधुरमेषान्दर्शनं । चतुरमेतन्नटनम् । ललितमिदं सङ्गीतम् लीन-

मस्यां मन्मनो वल्लक्यां । केयं परिवादिनी प्रवाळमञ्जुलप्रवाला प्रकृष्टप्रसेधका कोमलकोलंबका । कोऽयं कोणप्रपञ्चो विपञ्चयाः । केयं शैली मुरळ्याः काहल्याश्च । किमिदं रामणीयकं डमरुजर्जरयोर्मड्डुमड्डुलयोः । कथमाशंक्योऽयमंक्यः । कथं प्रशस्यं कांस्यं । कथञ्जाने तत्वतत्वं किमिति श्लाघेऽहमनघमोघं । कथं वेद्मि घनमपि सप्तानां स्वराणां । एतादृशं संविधानं न दृष्टपूर्वं नच श्रुतचरं । परन्तु कीशाएव सर्वाधिकारव्यापृताः । न पुनरेकोऽपि दृश्यते मनुजः । कं पृच्छेयं । कथं वा निर्धारयेयं । कुत्र वदेयं । 'एकः स्वादु न भुञ्जीत' इति शास्त्रमवगच्छन्नपि बत कथमिदमेकः स्वादुतममनुभवामि । उपवने निर्जने किल निवसामि कथमन्यान् पौरमान्यानानयेयं । कान् प्रेष्यान् प्रेषयेयं । अथवा प्राड्विवाकप्रमुखप्रकृतिसमाह्वानप्रयोजनां प्रचण्डनादामिमां महाघण्टान्ताडयामि" इति मनसि बहुतरं प्रकल्पयन् उत्थाय निजासनात् । सन्ताड्य सौधमध्ये बद्धां घण्टां । पुनरपि विष्टरमासाद्य । तत्र सम्यगाबद्धबन्धमुपविश्य । निमेषोन्मेषानप्यनिमिषवत्सन्त्यज्य । यथापूर्वं कीशशिल्पं पश्यन्ननर्गलं चक्षुस्सुखमनुबभूव ।

अथ संवर्तसमयसमुज्जृम्भमाणसप्तघनस्वनानप्यधरीकुर्वता सप्तसागरसंकुलां सर्वंसहामपि दारयता हरिदन्तविश्रान्तान्दुर्दान्तानष्टावपि दन्तावलान् बधिरयता अत्यद्भुतमत्याहितं वा सूचयता घण्टानिनादेन समुद्बोधिताः षट्कर्मसमृद्धाष्षट्कर्मवृद्धाः । आर्याध्यापकादिष्टमिश्रा आचार्यमिश्राः । महाराजवश्या राजवंश्याः प्रकृष्टमित्राणि कलत्राणि । महाशेमुषीकाः महामात्रप्राड्विवाकाः । कार्यदक्षा द्वाराध्यक्षाः । आयव्ययरक्षका भौरिकनैष्किकाः । अवरोधमल्लास्सौविदल्लाः । अन्ये च ससुहृदस्ससम्भ्रमा नैगमाः । "किमत्याहितमापतितमीशस्य । किं वाद्भुतमजनि लोकस्य । कोवा न्यरुण-

दरिरस्मद्राज्यम् । किमलभ्यत वा मन्त्री महाराजेन । योवा कोवा प्रजानां प्रतारणाय घण्टां प्राहरत्" इति परस्परमालपन्तः । स्वस्वगोष्ठीं परित्यजन्तः । कार्यान्तराणि परिहरन्तः । सुकुमाराध्युषितमुपवनतलं प्रत्याबालगोपालमखिलाः प्रतस्थिरे ।

चतुरेषु चातुर्वर्ण्यप्रवरेषु धावंधावमप्युपवनमनागच्छत्सु । अवनीपतेरक्ष्णोरभिनवमरण्यौकसामभिनयन्दर्शन्दर्शमप्यलंभावमनाप्नुवतोः तदीये कर्णद्वितये मार्कटीमातोद्यपरिपाटीं श्रावंश्रावमपि तृप्तिमनश्नुवाने । विटपान्तरितशरीरे सचिववीरे गगनगिरं स्मारंस्मारं "आसामप्सरसां विमुक्तिरापतिष्यति मम"इति चिन्तामधिगच्छति सति । पश्यन्तएव प्रयोगसौष्ठवं । नृत्यन्तएव सपादन्यासं । गायन्तएव मन्द्रादिसान्द्रं । वादयन्तएव वाद्यानि । प्रकटयन्तएव स्वस्वशिल्पान्यन्यानि सर्वएव वानरवरास्सशरीरास्सहशिल्पसंभारास्सपरिवारास्तत्रैव मण्डपपुरोदेशविशंकटरंगे तिरोदधिरे ।

अन्तर्भूय किल तास्सुरवारवनिताः । अपहाय शापादधिगतानि वानरशरीराणि सुरदीर्घिकापयसि । आसाद्य तेजोमयान् स्वकीयान् कायात् । आरुह्य विहायस्सञ्चारपरान्विमानवरान् । साधयामासुः स्वस्थानं साचार्यावस्थानं । भूषयामासुः सुधर्मां सुकृतलभ्याश्चर्यधर्मां । नन्दयामासुश्च निखिलान् निलिंपान् करुणामन्दिरञ्च पुरन्दरं आनतदेवतरुञ्च देवगुरुम् ।

तिरोहितेषु वानरजाते । या पुरस्तादुपवनस्थली सुरपुरायामास । या मण्डपिका सुधर्मायामास । यस्सुकुमारस्सुरराजांबभूव । यस्सुललितस्सुरदेशिकांबभूव । तदेतदखिलमत्यन्तपरिचितैरपि दुर्दशावशादपरिचितचरमिव काममासांबभूव ।

तदनु शापादप्सरसां समुन्मोचनेन पूर्णमानसोऽपि । वनौकसान्तिरोधानेन खिन्नमनाः कीशसंस्पर्शरहिततया वातंरहसां योगिनां

सरणैर्विगलितस्सुललितस्सुकुमारपरिष्वंगसमुत्सुकः प्रान्तेषु वनस्पतीनां संवृतस्समवतस्थे ।

सुकुमारोऽप्यनालोक्य वनमृगकुलं । अनाकर्ण्य तदीयमपि कलकलं । मुक्तइव नयनाभ्यां । त्यक्तइव कर्णाभ्यां । हीन इव मनसा । वियुक्त इव वाचा । विहीन इव त्वचा । पादाभ्यामुत्सृष्टइव । पाणिभ्यां विसृष्टइव । क्लिष्टइव नष्टइव दष्टइव भ्रष्टइव नकिमपि सस्मार । नक्वचिज्जगाम । न कथमपि चिचेष्टेतरां ।

इत्थमुर्वीपतौ निरवस्थकूटस्थवत् निष्कंपदीपवत् निस्तरंगतरंगिणीवत् उन्मत्तसार्वभौमवदासनासीने । संक्षुभितस्येव सागरस्य समधिकस्येव समीरणस्य सगर्जितस्येव जीमूतस्य महामात्रप्रमुखस्य पौरसंघस्य महीयानुद्घोषः प्रथमं यौगपद्येन तदनु क्रमेण च नागरसमूहस्सार्वभौमसविधमाससाद ।

अथ मत्तमिव मुग्धमिव वर्तमानं राजानमाचार्यप्रभृतयः प्रकृतयस्ससंभ्रममालोक्य । "अहो किमिदमापतितमत्याहितन्तत्रभवतः पृथिवीभृतः" इत्यन्योन्यं कथयन्त्यः। स्वयमेव तस्य सन्निधावात्मान मावेदयामासुः। तस्मै गुरवो गुर्वीराशिषः प्राडविवाकादयश्च जयशब्दानीरयामासुः किङ्कराः 'प्रभुवर' इति मित्राणि 'वयस्य' इति कलत्राणि च 'प्राणनाथ' इति तमामन्त्रयामासुः ।

तदनु सादरमाचार्यैराहूयमानः। विद्वद्बृन्दारकैर्विज्ञाप्यमानः। समस्तैनैगमैः स्तूयमानः क्षितिपतिरात्मानमितरांश्च नितरामबुध्यत । अनन्तरन्नागराणामागमनकारणमरण्यौकसामभिनयादिकञ्च संस्मृत्य पदेपदे 'कीशगीतं कीशगीतं' इति जल्पन् । प्राचार्यादीन् दृष्ट्वा प्राप्तकालं बुध्वा । विष्टरादुत्थाय । प्रणनाम देशिकान्महीयसः । आलिलिंग सुहृदस्सवयसः । ददर्श सेवकाननेकान् । चकार च यथा योग्यं यथाक्रममितरेषामुपचाराननुगुणान् ।

अनन्तरमखिलेषु विष्टरेषु यथाविभवमुपविष्टेषु । सेवकजनेषु यथाधिकारमासेवमानेषु । तत्रभवति च क्षितिभृति सिंहासनमलंकृतवति । प्राचार्येषु प्रतूतशोकः कश्चिद्राजानमुवाच "अहो महीपते कमुद्दिश्य विशेषमत्याहितप्रत्यायिका वा महानन्दसन्दर्शिका वा महती घण्टा ताडिता । यदा पुनरमात्यस्सुललितस्सन्त्यक्तः तदैव त्वया विमुक्तमतिललितमुदवसितं। आश्रितन्निर्जनमिदमुपवनं। परिहृतं वनितामुखं सुखं । अपहृतः सन्ततशोककुम्भीलकेन भवदीयहृदयकोशः । सन्तापतपनेन तव सुकुमारशरीरशिरीषं ग्लानिमुपगतम् । पीडाकृशानुशिखया निस्तुला भवदीयकान्तिकिसलयविभूतिर्म्लानिमधिगता । अद्य खलु तव मानसी विपत्केन हेतुना प्रगुणिता । चिन्ता कया विधया प्रकामविक्रान्ता । प्रबोधोऽपि केन प्रकारेण दुर्बोधः । मूर्च्छितमपि कुतो हेतोरूर्जितं । न केवलं विषीदति भवानेकस्त्वदायत्तास्सर्वेऽपि वयम् । तत्कथय तापनिदानम् । निर्वापय शोकं प्रकाशनेन । अस्माभिस्सह तत्प्रतीकारं पर्यालोचय" इति ।

तदाकर्ण्य पृथिवीपतिर्विचिन्त्य मर्कटनटनादिकलां वक्तुं प्राक्रमत—"भो भगवान् यदाह तदवितथमेव मयि। अन्यदमानुषमननुभूतपूर्वमत्यद्भुतमेकञ्चेष्टितामृतमालोकितं । तदवधाय चेतश्शूषत श्रोत्रचषकेण । पूर्वस्मिन्नेव समये द्वित्रघटिकाभ्यः । एतस्मिन्नेवास्थाने मण्टपिकायाः । अमुष्मिन्नेवासने महीयसि । विषण्णे वयस्यस्य वियोगरोगेण । निषण्णे मयि निध्याय किमपि । प्रादुर्बभूव प्रकामकमनीयनृत्यं प्रभूतसंगीतमहितं प्रकृष्टवेषभूषाविशेषं प्रक्रान्तानन्तवाद्यान्तरं प्राज्यमरण्यसाम्राज्यसज्जमटवीमृगकुलमविरलं । प्रादुश्चक्रे च विमलाः स्वस्वकलाः । प्रादुरास च ममामन्दतरस्सन्तापतुन्दिलस्याप्यानन्दः । प्रणष्टः प्राक्तनश्शोकप्रकरः । प्रविष्टं तद्गीतावेव मानसमतिसरसं । प्रभ्रष्टः पदार्थान्तराविवेकः । अथ तत्र निर्लीनमन्तःकरणं

बलादाकृष्य । "सर्वेऽपि संगीतसुखमिदमनुभवन्तु" इति विचिन्त्य । प्रहतवानस्मि प्रचण्डनादां घण्टां । अनन्तरमाहननभीत्या वा किम स्मद्दौर्भाग्यरीत्या किमु चञ्चलतरस्वप्रकृत्या वा तच्चटुलविटपमृगकुलमन्तर्धिमाप । तदनु त्रिविष्टपपरिभ्रष्टइव नहुषः । वसिष्ठशापकूपनिपतितइव त्रिशंकुः । विचिन्त्यानारतन्तदेव वानरगीतमहमेतादृशीमवस्थामापन्नः प्रतिबोधितश्च भवद्भिः" इति विस्मयावहमाह्वानकारणमावेद्य भूपतिस्तूष्णीं बभूव ।

तदाकर्ण्य समागतेषु न कोऽपि तद्वचसि विश्वासं चकार । प्रामाणिकेषु न कोऽपि तत्प्रमाणमनुमेने । प्रशंसकेषु नैवैकोऽपि तत्प्रशशंस । मित्रेषु न किमपि तदङ्गीचकार । भार्यासु तन्न कापि शश्लाघे । किञ्च 'देवस्य पित्तविकृतिरियं भौतिकोऽयमुद्रेकः दिष्टचेष्टितमिदं' इत्यनेकप्रकाराः पौराणां किंवदन्त्यस्संजज्ञिरे ।

सुकुमारोऽपि एकतो दुस्सहेन सचिवविरहेण । परतो वानरगीत्याः अपुनरावृत्त्या । अन्यतो मर्माणि तुदन्त्या निखिलनैगमकिंवदन्त्या । शल्यसमाविद्धइव तरुणहरिणः । दावपावकपरिवृतइव करिकलभः । महाकूपपतितइव वरवृषभः । संभ्रान्तस्वान्तः पुनरेवमवादीत् "न कोऽपि विश्वसिति मद्वचसि । न किमपि विभाति मम मनसि । नैकोऽप्यस्ति सचिवप्राप्तिप्रकारः न कापि पुनरपि कीशनटनदर्शनोपायवार्ता । न कोऽपि रोचते मह्यं । न कस्मैचिदपि रुच्ये । किं करिष्यामि । क्व चरिष्यामि । कं वा प्रक्ष्यामि । किं वा कर्तुं शक्ष्यामि" इति ।

अथ संविदितसकलप्रवृत्तिस्सचिवपतिः । आश्वासयितुमात्मसुहृदं। विश्वासयितुं विश्वां प्रामाणिकपरिषदं। उन्मार्ष्टुमलीकजनप्रवादं । शमयितुमखिलजनसन्तापं। उष्णभानुरिव तुषारसन्ततेः कुमुदाबान्धवइव जीमूतसंहतेः । परमेश्वरइव मायावृतेः महाशेवधिरिव निक्षेपक्षितेः ।

महेन्द्रइव महानालवसतेः महाहरिरिव कन्दरान्तरस्थितेः । महामणिरिव महोदधिमध्यावास्थितेः । निरगच्छद्वनस्पतिसंवृतेः ।

निर्गत्य स मन्त्री वाहिनीमध्यमिव सेनानीः । यूथमध्यमिवैरावतः । मुनिगोष्ठीमिव बादरायणः । प्रमथगोष्ठीमिव शैलादिः । तारकान्तरमिव निशारमणः । देवान्तरमिव नारायणः । पौरनिकरान्तरं प्राविशत् ।

प्रविश्य स सचिवः संक्रन्दनमिव संवर्तसहोदरः । राजराजमिव द्विजराजशेखरः । रघुनन्दनमिव विधिनन्दनः धर्मसूनुमिव द्वैपायनः । सव्यसाचिनमिव जनार्दनः । सुकुमारमपश्यत् ।

नागराश्च सर्वे दुस्सहक्लेशकृशशरीरं तं सचिवमालोक्य । क्षणमेकमेकायनीभूतमानसाः 'कोऽसौ' इत्यालोच्य । निपुणया धिषणया 'सुललितः' इति निश्चित्य । 'भावुकमस्माकमापतितं' इति परस्परमाचक्षाणाः । कलकलममन्दमानन्दथुना तन्वानाः 'महाराज सचिवस्सुललितस्समागतः' इति वाचमूचिरे ।

सुकुमारोऽपि विकिरन्तीमिव हरिचन्दनकर्दमसारान्। विडम्बयन्तीमिव पीयूषपूरासारान् । विमोचयन्तीमिव मोचाफलमधुरताम् । विरसयन्तीमिव रसालस्वादुताम् । दण्डयन्तीमिव द्राक्षावलेपम् । खण्डयन्तीमिव माध्वीकमदप्रकर्षम् । रुचिरवचसां पुरौकसां वाचमशृणोत्। आनन्दावेगेन विहाय विष्टरमुत्थातुमपि कञ्चित्क्षणन्नाशक्नोत्। अभितस्स्वमाक्षिद्वयं प्रेरयन् 'क्वमित्रं क्वमित्रं' इत्यचिनोत् । अन्तिकमागतप्रायमज्ञेयकायममात्यमवगत्य ससंभ्रमं तमभ्युद्गत्य तच्चरण कमलयुगले पतित्वा "वयस्य मदीयमागश्चयमात्मनि मामन्यस्व" इति तमर्थयामास ।

सोऽपि सचिवः 'सखे समुत्तिष्ठ को मन्तुस्तव' इत्युदीर्यतमुत्थाप्य बाहुभ्यान्दृढनरं परिरेभे ।

अथ तौ सुललितसुकुमारौ प्रमोदमपरिमितमुद्वहन्तौ आनन्दाश्रूणि मुञ्चन्तौ आपादमस्तकं पुलकांकुरैर्निचितौ अशेषलोकानां हर्षावहौ एकस्मिन्नेवासने गाढाश्लेषव्यापृतान्योन्यौ कैकदोषौ । एकस्मिन्नेवासने कृष्णार्जुनाविव रामलक्ष्मणाविव न्यषीदताम् ।

आधिकारिकाश्च " किं प्रक्ष्यति नृपतिरस्वस्थहृदयः । किं वक्ष्यति सुललितस्सुललिताभिप्रायः" इति तयोरुक्तिप्रत्युक्ती श्रोतुकामाः यथार्हमुपाविशन् ।

तदनु वर्षप्रकर्षेणेवावग्रहक्लिष्टः कर्षकः । अनुकूलपवनेनेव क्षेपणीविभ्रष्टः कर्णधारः । महानिक्षेपेणेव विनष्टसर्वस्वो मानी । जलाशयेनेव तृषापरवशः पान्थः सुहृत्संश्लेषेण गुरुतरकरुणोऽपि सुकुमारः पुष्टिमितरदुरवापामवाप ।

मुहूर्तात्परं स नृपतिस्सचिवमेवमुवाच " अपि कुशलममात्यमित्ररत्न निष्कारणम्मया निष्कासितस्य भवतस्तत्रभवतः । क्व भवानियन्तं कालन्नीतनान् । कांस्कान्देशान् पर्यटितवान् । कस्कस्तपोवनविभागस्त्वया निषेवितः । किंकिं पुटभेदनं विलोकितम् । कश्चिदाश्चर्यविशेषः किमनुभूतः । कच्चिदाकर्णितं यत्र कुत्रचित्कपिगीतम् । यस्मिन् क्षणे निरागास्त्वं निजनिलयान्निरगाः । तस्मिन्नेव क्षणे निरयप्रायादालयादहमपि निरयाम् । विधूय महितमपि भोग्यजातम् । निर्विण्णस्त्वद्विरहानुसारेण दुर्भरेण पश्चात्तापभरेण निवसन्नस्मिन्नुपवने निर्निद्रो दिवारात्रमेकाकी । मन्वन्तरमिवैकैकं वासरं निरयापयम् । अनन्तरमत्यन्तविचित्रतरमवाङ्मनसगोचरमरण्यौकसामभिनीतिपुरस्कृतमविगीतं गीतं मम भवद्विरहवेदनाजातमाहतमकरोत् । अथ पुनस्सर्वेषामेषामविश्वासभाजनमभवम् । अद्य किल भवन्तमनुकम्पयाऽऽगतवन्तमालोक्य विगलितसकलसङ्कटोऽस्मि" इति ।

अथ स्वविरहावग्रहसञ्जातसङ्कटसंक्लेशिते सुकुमारपुरस्सर

पौरवर्गप्रशस्यसस्यजाते सुललितवर्षाघनाघनो वाचामृतधाराप्रकर्षान्वर्षितुमेवमारेभे ।—“ भोभोस्सकलप्रामाणिकप्रवरास्तत्रभवन्तो मुहूर्तमेकं नितान्तं स्वान्तमवधाय । समस्तान्मदालापानाकर्णयन्तु । अभूतपूर्वमात्मकल्पितमधिकविशयमभिप्रायमुत्सृज्य । राजानमत्रभवन्तमनस्वस्थचेतनमवगच्छन्तु । अहो मित्र मन्मुखांभोजमित्र । “एकस्साक्षी न प्रमाणं जायते सुमहानपि । यथा भवान् कीशगीते तथैवाहं शिलाप्लवे” ॥ तदात्वे मयोक्तां नावमिव पयसि प्लवनशीलां शिलां यथा त्वं नाङ्गीकृतवान् । अद्यत्वे त्वयोच्यमानमरण्यमृगगानमिमे तथा नाङ्गीकुर्वन्ति । उभयमपि सत्यमेवावयोः । परन्तु कीशगीतमालोकितम्मयैव पुरस्तात् । भवतातु परस्तात् । सावधानमाकर्णय । विज्ञापयामि मच्चरित्रमध्यगतं कीशचरितमपि। उदक्यानिर्विशेषं भवताऽहमधिकसत्कारादधिकारान्निष्कासितः। परिव्राडिव विलासानामाकरादगारान्निर्गत्य । पन्नगः कोशमिव देशमिमं विमुच्य । अशरणइव बहूनवनीभागानटन् । भिक्षुकतुल्यमखिलासु दिक्षु विदिक्षु च चरन् । आश्रमीव तार्तीयीकः चित्रं विचित्रारण्यन्नाम महद्वनमनुपममगच्छं । तत्र वनचरइव ततश्चेतश्च भ्राम्यन् । अतिमञ्जुलमभिनयादिसरलमिन्द्रजालकलाविलसितमिव विचित्रमरण्यमृगकुलमपश्यं । तदधिपतिं शंबरारातिमिव विधृतमूर्तिं शबरपतिम्मनोज्ञमाजानविद्यसंज्ञमपृच्छं “को भवानिमान्विशदविभवान् कीशाननुशास्ति” इति। स रसिकपुंगवः कथयन्नेव निजवृत्तं पुरानुभूतग्रावेव तिरोधानमाप्तवान् । अथ विषीदति मयि कीशेष्वप्यनीशेषु मदीया भाग्यविभूतिरिव काचिदशरीरिणी वाणी प्रादुरासीत् “अयमाचार्यो मुनिर्भरतस्सुरगुरुशापात्प्रस्तरतां शबरताञ्च भवद्दर्शनावधिकामधिगतः ततोभवता च मोचितः । इमाश्च सुरवारामाः पुरुहूतकोपेन वानरतां सुकुमारसन्तोषणावसानामवाप्ताः कृपया त्वयैव ततो मोचयितव्याः। एतासामेकां स्पृष्ट्वा कञ्चित्कालं योगिसंपदमप्यनुभव” इति। एवमादिश्य मां व्यरंसीच्च। अनन्तरमवधूय दुःख-

भरं । अवलंब्य कीशवरं। अनुभूय योगिचर्याम्। अवगाह्याकाशपदवीं आगत्य निमेषमात्रेण वनौकसां सह समूहैरमुमुद्देशं । स्वयमहमन्तर्हितः । तदीयमनल्पं तव पुरशिल्पं सन्दर्शितवान् । आधिमन्तमपि भवन्तं सन्तोषितवान् । तास्सुरवाररमणीरपि कपिभावाद्विमोचितवान् । अनन्तरमेतेषां पौराणामुत्पथालपितानि तानि तान्याकर्ण्य । एनांश्च लोकानधिकशोकानालोक्य । झटिति प्रकटीभूतश्चिरकांक्षितानि प्रियवयस्यद्दावगूहितान्यनुभवामि ।" इति । एवं स सचिवः सविस्तरमामूलचूडमावेद्य चरितमात्मनीनं विरराम।

अथ सर्वे सभासदस्सन्त्यज्य कुटिलतां प्रकृतिमात्मीयामभजन् राजापि राहोर्मुक्तः पूर्णिमाशशांक इव प्रकाशमानः । सुललिताय तदधिकारमतिललिताय वितीर्य । "दैवप्रभावः पौरुषविशेषमप्यतिशेते" इति पदेपदे दिष्टमेव प्रशंसन्। प्रजाभिस्सह निजनिकेतनमागम्य । शशास यथास्वतन्त्रं यथामन्त्रिमन्त्रं यथामन्वादितन्त्रमपगततन्द्रमखिलमवनीमण्डलमाधिगतमंगळम् ।

वन्देऽहं वल्लवीभाग्यं वन्दारुसुरभूरुहम् ।
सुन्दरं गुणसन्दोहमन्दिरं नन्दनन्दनम् ॥

**इति श्वेतारण्य नारायणशर्मणा रचिते गद्यकाव्ये कल्पितं सुकुमारवर्मचरितं समाप्तिमगमत् ।**

---

# महामोदचरितम् ।

वन्दे तं गोविन्दं करुणालेशं यदीयमधिगम्य ।
मूकोऽपि भवति माध्वीमधुरिमधौरेयहृद्यवाग्गुम्भः ॥
शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते ।
शिष्टः पुष्टिं ययौ मोदः पापः प्राप शुचम्मदः ॥

अस्ति सुराष्ट्रन्नाम राष्ट्रम्महाराष्ट्रेषु । यत्पुण्यजनाश्रितमप्यपुण्यजनाश्रितं । देवानांप्रियमपि नदेवानांप्रियं । षट्कर्ममण्डितमप्यपरिमेयशुभकर्मालंकृतम् । संख्यावज्जननिबिडमपि संख्यातीतजनसंकुलं । यदनिशमतिविशदसौधलक्ष्मीविलासैरपहसतीवामरावतीमत्याश्चर्यवतीं । यदभ्रंकषैः कनकशिखरांगुलिनिवेशननिचयकरभरैरपहर्तुमुद्गच्छतीव नवनवं विश्वकर्मणा सृज्यमानममरपुररामणीयकम् ।

यत्र वर्धमानक्रीडागिरीणां विन्ध्यातिशायिमहौन्नत्यानामालोकनेन सञ्जातभयौ पुष्पवन्तौ विन्ध्यगर्वसर्वंकषं कुम्भसंभवमनेकधा जनयितुमर्थयेते भगवन्तं भारतीकान्तम् । यत्र च वर्तमानान् धिषणाधिक्कृतधिषणानन्तर्वाणीननिशम्यैव बृहस्पतौ स्निह्यति बृन्दारकपतिः। यदलंकुर्वतीस्तिरस्कृततिलोत्तमालावण्याः कदाचिदप्यनिशाम्य पण्यांगनास्सन्तन्वते वैतानकर्माणि जगति सन्तस्सौवर्गीणवारसीमन्तिनीषु तृषावन्तः । यत्र भासमानाश्चारुचातुरीधुरीणाः कालारातिफालानलज्वालाविलीढस्य स्मरतरोर्मूलादुत्पन्नाः कारणगुणसंपन्नाः प्ररोहाइव सचमत्कारमुत्प्रेक्ष्यन्ते कविकुलैः । यत्र च वणिग्जनविस्तारितपरार्घ्य

मुक्ताविद्रुमादिमणयः पण्यवीथिकाः जलमानुषमात्रनिरीक्षणजनितामात्मीयामकीर्तिमुन्मार्ष्टुकामेन सागरेण विरलय्य जलभरमजलपुरुषदृष्टिगोचरीकृताः रत्नाकरप्रदेशाइव लक्ष्यन्ते । यत्र च राज्ञः प्रमदवनदीर्घिकासु विकचकमलहंसतूलिकातल्पमधिष्ठाय कृतबिसशकलचर्वणानि मकरन्दकल्पितगण्डूषप्रक्रियाप्रमुखं सुरतसुखमासेवमानानि राजहंसमिथुनान्युपदिशन्तीव निधुवनचर्यामसूर्यंपश्यानां त्रपावतीनाम्मुग्धांगनानाम् । यत्र च महान्तस्संवीभूय सञ्चरन्तस्सबृंहिताः करिणः सनिनदवलाहकस देहमावहन्ति । यत्र च ह्रेषमाणानात्मतुरगधिक्कारिपञ्चधारातरङ्गानालोक्यैव तुरङ्गान् भगवान् सप्तसप्तिरपि स्वपरादिव्यभौमवाजिविनिमयविरचितविविधालोचनइव मन्दमन्दमञ्चति दिनेषु भृशमौत्तरायणेषु ।

यत्र च प्रभूतबलसम्पत्तयः पत्तयः सञ्जातकीर्तयोऽपि निर्मलाः कृष्णवर्माणोऽपि चकासति देवदत्तशर्माणः ।

यत्र च शिक्षाविधिराम्नायेषु । शून्यवादो रामामध्येषु । कर्णेजपत्वं मुग्धांगनारतेषु । दिगंबरत्वं स्तनन्धये । सत्प्रतिपक्षोहेत्वाभासेषु। चौर्यचर्या गोपालबाललीलाचरित्रेषु । नीचैर्गतिर्निम्नगासु। पदच्छेदः पद्यगद्येषु । कलंकिता कलानिधावपि न कलानिधौ । कुटिलगामित्वमाशीविषेषु । दण्डार्हता वर्षेष्ठेषु । मधुपायित्वम्मधुव्रतेषु । मान्द्यम्मदिराक्षीविलासगतिषु । रागातिशयो रमणीबिंबाधरेषु ।

यत्र च बुद्धाचाराअपि सेश्वरवादास्सन्ति नराः । सद्गोष्ठीप्रविष्टाअपि रात्रिन्दिवं शोभन्ते सीमन्तिन्यः । षट्क्रियाअप्येकाक्रियाः भूसुराः । परत्रतापकृतोऽपि परप्रतापहृतः क्षत्रियाः । गोरक्षोत्तमा अपि गोरक्षावमाः वैश्याः । वेदनिरतवर्णशुश्रूषायां सरसाअपि विरसाश्शूद्राः । स्वविहितशिल्पेषु सुमुखाअपि विमुखाः प्रतिलोमानुलोमजाः ।

यच्च निर्जरनगरमिव विबुधविभूषितम् । शरकान्तारमिव प्रभूतगाङ्गेयम् । त्रिलोचनशिरस्थलमिव राजमानकलाधरम् । रसातलमिवाहीनकुलसंकुलम् । अलकापुरमिव मनुष्यधर्मोपेतम् । अमरास्थानमिव महोपवनमिव च सुमनोबृन्दमण्डितम् । हरिकरकमलमिव हरिणकुलवदनमिव च सुदर्शनयुतम् । पुष्करिणीप्रकाण्डमिव पुष्करान्तरमिव राजहंससञ्चारशोभितम् ।

तदधिवसति स्म पुटभेदनं त्रिविष्टपमिव त्रिदशेश्वरो राजा राजराजवर्मा नाम । यश्च सुपर्वाधीशइव सुधर्मावस्थितोऽपि चित्रमसुधर्मावस्थितः धनदइव धनपोषकोऽप्यधनपोषकः । यादसां पतिरिव सर्वतोमुखसञ्चारोऽपि प्रचेताश्चाप्यजलसञ्चारो विप्रचेताः । अकूपारइव परमकरोऽप्यल्पीकृतकरः ।

यस्तु राजराजसखोऽपि सवज्ञोऽपि राजकळालंकृतोऽपि दुर्गापेतोऽपि परपुराजिदपि नाख्यायत विरूपाक्षइति विचक्षणैः । योऽपि श्रीवत्सशोभितोऽपि सलक्ष्मीकोऽपि यशोदयालालितोऽपि गोपालोऽपि स्वायत्तचक्रोऽपि शिशुपालद्विडिति न विज्ञायतेस्म प्राज्ञैः । यश्च राजहंसशेखरस्थोऽपि चतुरास्योऽपि भाषाप्रियोऽपि सत्यलोकाश्रितोऽपि अच्युतनन्दनोऽपि नाध्यगच्छन्मिथ्यावादिताम् । योऽपिच सुमनश्शेखरोऽपि धिषणान्वितोऽपि जिष्णुरप्यनन्तयानोऽपि शतकोटिकरोऽपि नाभजत्सद्गोत्रपक्षशिक्षकताम् ।

यं क्षमापतिमहमहमिकया महाकेदारमिव समधिगत्य सकलगुणास्सरित्कासारप्रस्रवणप्रवाहाइव समतन्वत परोपकारम् । अप्रमेयधैर्यमवार्यगाम्भीर्यमनुपमसौन्दर्यमनवधिकौदार्यं यं निशाम्यैव तुषारगिरिरचलतां अम्भोनिधिर्महाजडतां रतिपतिरनंगतां चिन्तामणिरश्मशैलीमध्यगच्छत् । वश्यगिरं पुरुषोत्तमं सदाशिवं यं सततं त्रिमूर्तिविवर्तमाख्यान्ति संख्यावन्तः ।

येन च सहस्रकरेण राज्ञा गोत्रोदयेन सौम्येन विबुधगुरुणा कविना सूर्यात्मजेन राजहंसमण्डलपरिभाविना भव्याभव्यानि समधिगतवन्तस्सदसज्जनाः । येनाऽपि धर्मराजेन भीमसेनेन किरीटिना प्रध्यानकुलेन सहदेवेन व्यध्वस्यन्त धृतराष्ट्रसंभूतयश्शतधा क्षितिपतयः।

यस्मै परमकराय गोत्रोद्धाराय श्रीभूदाराय नरसिंहाय बलिगर्वमुषे सहस्रकरजित्वरप्रतापजुषे दशरथसुताभिख्याय बलदेवाय गोपाधीशाय प्रच्छादितम्लेच्छाटोपाय समीचीनदशाकाराय पद्मा सुतरामतिष्ठत ।

यस्माद्धरणीभृतः प्रभवन्त्यः परस्सहस्राः वाहिन्यः परमहीधरदुर्गान्तरमदारयन् । यस्य पापनरकशिक्षकस्यापि पापनरकादेव भीतिरुदपादि । यस्य परलोकास्तिकस्यापि परलोकनास्तिकता मनसि ललास ।

यस्य चरणौ सकलसामन्तमकुटमाणिक्यकिरणाभरणौ । जंघे जगदखिलशोकशृंखलाविदळनजंघाले । जानुनी चन्द्रकान्तमुकुरभानुनी। ऊरुदण्डावधरीकृतशुण्डादण्डप्रकाण्डौ । कटितटः कनत्कनकपटः । नाभिरभिशोभमानः प्रभूताभिरवलग्नावसक्तमणिमेखलाप्रभाभिः । सबालतृणसारणीसब्रह्मचारिणी त्रिवलिनिश्रेणीमुपारूढा रोमश्रेणी । रमणीयचन्दनादिविलेपनं वक्षःफलकं राज्यलक्ष्मीकल्याणफलकं । मुखचन्द्रसेवासमायाततारकानिकरशंकाजनकमुक्ताफलकलापधरा कन्धरा । धगधगन्माणिक्यमण्डितपञ्चशीर्षात्रिवाशीविषौ रत्नोर्मिकानिचयनिबिडीकृतशाखौ पञ्चशाखौ । पळपळत्पद्मरागमणिकटकबन्धौ मणिबन्धौ । चकचकद्वैडूर्यांगदप्रवेष्टौ प्रवेष्टौ । हीरकुण्डलतल्लजकिरणपूराकीर्णौ कर्णौ । कुन्दकुड्मळमन्दाक्षप्रतिपादनकृतिर्दशनततिः । वराकीकृतराकाशशांकं मुखमकळंकम । मुकुटमुत्तमांगासंगममलहेमभूमिधरैककूटाभिषंगम् ।

यस्मिंश्च राजराजवर्मणि कलितराज्यशर्मणि । द्विजभङ्गः पक्वफलेषु । धर्मद्वेषः कालकाले । द्विजिह्वमहत्ता नागलोके । विषदायित्वं वलाहकेषु । शतकोटिशिक्षा शिलोच्चयेषु । विपत्प्रचारस्सवितृसारथौ । अक्षदेवनमनिलात्मजे । करपीडनं सवर्णापरिणये बभूव।

तस्य सुराष्ट्रपतेः कलानिधेरिव कळंकः श्रीकामुकस्येव श्रीवत्सांकः कालारातेरिव काळकूटांकः समजनि महामदनामा मन्त्री ।

यस्तु दशवक्त्रइव सुरारक्तनेत्रः परराामातिदुष्टाशयश्च । दन्दशूकइवाऽलोकाश्रितः विप्रवरकुलद्वेषी च । यं शशंसुः "यथा राजा जारः । पिकः कपिः । तथा दमो मदः" इति विनिमानकुशलानि वन्दिकुलानि । यश्च मनसान्यदमन्यत । वाचान्यदब्रूत । तन्वान्यदतनुत । यस्य नाम्नीव वपुषि वचसि चेतसि च मदः । योऽपि कुञ्जरइव करादानचर्वणचणोऽपि सर्वांगमदपूर्णः । यस्य धीरिव चिन्ता चिन्तेव स्पृहा स्पृहेव रचना सकलजीवराशेररुन्तुदा सर्वदा । येन मन्त्रिणा राजराजस्य महाराजस्य सन्मोदने स्वायत्ता । असत्तोदने सचिवायत्ता परराष्ट्राक्रमणेतूभयायत्ता वृत्तिरभूत् । यन्तु पिण्डीभूतमिव कलिकालकलिजातम् । मूर्तिमन्तमिव मायाप्रपञ्चम् । सशरीरमिव कालयामिनीगाढान्धकारम् । निभालयतामाकर्णयताञ्च नृणामकस्मादभवन्नयुतवज्रसूचीतुन्नानीव कळेबराणि । दुस्सहमपि यस्योपद्रवसन्दोहमसहन्त राजराजवर्मणः कर्मभिरकपटैरखिलाः प्रकृतयः । प्रशस्यतमममात्यमहर्दिवमधिभावं जगदीशं प्रार्थयन्त ।

तादृक्षोऽपि नृपतिर्हर्यक्षस्तादृशमपि मन्त्रिपाशं सकलानिष्टमपि कृत्वा स्वेष्टमिव । सकलमपि राज्यकृत्यमनुतिष्ठन् । कुलक्रमागततया तमपहातुम् । स्वसमानकलाशालिनन्नूतनमादातुमपि नाशक्नोत्।

इत्थं गच्छति बहुतिथेऽनेहसि । स कदाचिदेकएव महीपति-

राखेटकाय विविधविनोदशृंगाटकाय । आरुह्य सप्तिवर्यम् । आदाय शरासनम् । व्याळमेदुरं कान्तारं प्रातिष्ठत । मध्येसरणि सर्वतः केदारमाकीर्णाश्शालिकणिकास्सञ्चिन्वानं मुखमहस्सन्तितिभरूहनीयमहामहिमानं महादारिद्र्यसूचकविशेषकृशिमानं महामोदनामानं महीसुपर्वाणमैक्षत । तदनु सत्वरं वाहादवरुह्य सादरन्तमानम्य सकत्थमित्थमपृच्छत् "अहो भगवन् को भवान् सदेहइव सुकृतपरीवाहः । साकारइव शारदचन्द्रिकापूरः । समूर्तिरिव सकलसत्कीर्तिः । संकुचितइव सुधारसवीचीचयः । समुदितइव सुरस्रवन्तीप्रवाहसमुदायः । सम्मिलितइव क्षीरवाराशिवारिवारः । संपुटितइव घनसारघनसारः । सजंगमभावेव स्फाटिकशिलाप्रतिमा । समधिगतप्राणप्रतिष्ठितिरिव कलानिधिकान्तप्रतिकृतिः । समाकलितसञ्चारइव कैलासकाश्यपीधरः । कामभिख्यामात्मपुत्रकलत्रकृपणाख्यावन्नाभिधत्ते भवच्छात्रग्रामश्श्रेयस्कामः । कञ्जभवविभव कञ्जनपदं कल्पितकलिः कलिरपि भवद्भीत्या प्रवेष्टुमपि न प्रगल्भते । विद्यादिभिस्समानोऽपि श्वशुरेण काभ्यामेवगोत्रप्रवराभ्यामस्यसमानः । न लक्ष्यसे वनप्रस्थइव । किमुञ्छसि वनप्रस्थेषु गृहस्थोऽपि महीसुरककुत्स्थोऽपि सत्सु मादृशेषु भवादृशसत्पात्रदर्शनकुतुकपरवशेषु । यदि नभजसि जगत्सु नैस्पृह्यं निरवधिकसुकृतलभ्यम् । यदि न मन्यसे सुराष्ट्रस्य राजानमिमं तृणसधर्माणम् । तूष्णींभावमुत्सृज्य त्वद्वृत्तान्तश्रवणोत्कण्ठातमच्छटाप्रसरे कर्णाकाशविवरे वाचामृतज्योत्स्नां विकिर" इति ।

अथ वितथेतरमोदो महामोदो विलोक्य विश्वंभरापुरन्दरं विवर्तमिव पौरन्दरम् । विस्मित्य सानन्दममन्दम् । विधाय वामेतर हस्तमूर्ध्वोदस्तम् । वितीर्याशिषस्तस्मै बहुलाः । चचक्षे साश्चर्यमार्यापञ्चकम् ।

"त्वदरीणां पुरि राजन् तृणचयमप्राप्य तुरगगोमहिषाः ।
केशश्मश्रु चरन्तस्तेषां त्वद्भृत्यकृत्यमादधते ॥
विपिने त्वदरिस्त्रीणां विगलितवस्त्रं पलायमानानाम् ।
कायान् कण्टकलतिका दिगंबरत्वक्रुधेव वितुदन्ति ॥
जीव शतं शरदस्त्वं जैवातृकइव सदध्वगस्सकलः ।
संभृतकुवलयमोदस्सर्वधराधारशिखरकृतपादः ॥
राजन् त्वद्देशगते ग्रामे श्रीब्रह्मवर्धनाभिख्ये ।
जातः कुशिकजगोत्रादापस्तंबीयसूत्ररत्नगतः ॥
पुत्रकळत्राण्यवितुं रिक्ततमस्संज्ञया महामोदः ।
उञ्छसिलामृतवृत्तिर्विपिने ग्रामेऽप्यहं चरन्वर्ते॥" इति

एवमावेद्य हृद्यं वर्तनमात्मनीनम्। तत्रभवत्यग्रजन्मनि महामोदनामनि विरतिमुपगतवति ।

महीपालोऽपि तमालोक्य तपोविशेषसमुद्द्योतितम् । आलोच्य च सुचिरं "अमुमाकिञ्चन्यपारावारपूरनिमग्नमवनिपतितिलकसमविभूतिमातनुयां" इति । आपृच्छ्य च तमवनीसुरप्रवरं "अहो भगवन् भण यथाभिलषितं किमपेक्षसे मत्तस्त्वादृशमहनीयमनीषितपूरणचणान्तःकरणात्" इति। आकर्ण्य च "भो महीविभो मह्यं प्रतिपादय प्रतिदिनं पञ्चप्रस्थप्रमितानमलांस्तण्डुलान् प्रधानानि तत्साधनानि च" इति निरवधिकनिजनिर्बन्धसन्तरळस्वान्तेन सन्ततनैस्पृह्यसंशान्तध्वान्तेन निरन्तरनिर्लिंपप्रसादेन महामोदेन समीरितां वाचम् । आनन्द्य स्वात्मानमीदृशमहातिथिमहनमहानन्दमनुभविष्यन्तममन्दम् । आख्याय "प्रतिदिनमागत्य पवित्रीकृत्य च मद्गुदवसितम् । अविगणय्य च भवदागमनसूचनमात्मीयस्यैव निवेदनम् । अचिन्तयित्वा मदीयमागश्चयं । स्वीक्रियतामयाचितोपनतं भगवन् भवता सतत

इति । आनम्य तं पुनः पुनस्साष्टांगं सहासंगम् । अवाप्य तेन प्रोक्तान्याशीस्सूक्तानि । आरुह्य पुनरपि हयं गतिविजितवैनतेयम् । आसाद्य व्यालशरण्यम्महारण्यम् । आरच्य मृगयां मृगगणमृत्युमायाम् । स्वीयं पुरमयमाययौ ।

आगत्य सच पुरम् । आविश्य निजनिकेतनम् । अवतीर्य तुरगात् । "असौ नीयतामर्वा मन्दुराम्महितमंगलमेदुरां" इति सन्निहितमश्वरक्षाधुरन्धरं किंकरमादिदेश ।

तदनु स्नानवेश्म समन्ततस्संघटितचन्द्रकान्ताश्म प्रविष्टस्समुन्मोचिताखेटनवेषः शीतलजलद्रोणीमवतीर्य नाणीयसीम् । आमलककल्केन सुगन्धिना समभ्यक्तसर्वांगस्स्नानकार्यमपरिहार्यं समाप्य । ततस्समुत्तीर्य पवित्रेण वारिणा पितॄन् सन्तर्प्य । शारदकौमुदीधवळे विमले लघीयसी परिधाय दुकूलवाससी । आ च कचपदात् आ च प्रपदात् लाटीहसितधाटीधवलेन भसितेन विलिप्तः । प्रदाय भास्कराय माध्यन्दिनमर्घ्यं । जपित्वा गायत्रीं जञ्जपूकत्रात्रीम् । समभ्यर्च्य पूजनीयमखिलैर्निलिंपकुलैरगजाभीकमपहृतसंसृतिभीकम् । समापितबलिकर्मा राजराजवर्मा सुरभितमकेसरघनसारहिमनीरचमत्कृतचन्दनचर्चितकलेबरः कस्तूरीकर्दमकल्पितस्थासकभासमानफालान्तरः कतिपयैः कमनीयगुणनिचयैश्श्रोत्रियैर्विश्वंभरादितेयैः समानसौन्दर्यौदार्यादिप्रशस्यैस्सह सच्छात्रवयस्यैश्च सम्यगभ्यवहारकार्यमारचयामास ।

अभ्यवहृत्य यथोदितग्रासमग्रामीणपरिहासम् । उपस्पृश्य पानीयमक्षारमडिंडीरमालग्नकन्धरान्तरम् । आगत्य विनोदशालां विटनटपीठमर्दकसंकुलाम् । आसाद्य तदन्तरमलकनकपर्यंकं समन्ततः परिकल्पितहर्यङ्काङ्कं। आघ्राय सुरभिलधूपवर्तीपरिमलमविरलम् । आसेव्य तांबूलकरंगिकाकरतलसोल्लासवितीर्णां विचित्रतरकोमलसुवर्णसवर्णतांबूलीपर्णां विविधपरार्थ्यक्रमुकमृदुलशकलसंकीर्णां सावदातमुक्ताचूर्णां एलालवंगवालमरीचिघनसारप्रमुखपरिमलवस्तुजातबहुलवासनापेटिकां

सौभाग्यनाटिकां तांबूलवीटिकाम् । कञ्चित्कालं कर्णयुगलकल्याणानि पुराणानि शुश्राव ।

तदनु स महीपतिः विनेतॄनृचाम् । धारयितॄन् यजुषाम् । वेदितॄन् साम्नाम् । विचारयितॄनथर्वणामंगिरसाञ्च । शिक्षकान् शिक्षासु स्वरादिसंरक्षादक्षासु । कल्पनाचुञ्चून् कल्पसूत्रेषु यायजूकनेत्रेषु। व्याख्यातॄन् व्याकरणे वाञ्मलनिराकरणधुरीणे । निरन्तरासक्तान् निरुक्ते निर्मलनिगमवचोविपरीतार्थविशयविदलनविषयविषक्ते । निरवग्रहाग्रहान् नवग्रहगतागतादिबोधनस्वतन्त्रे ज्योतिस्तन्त्रे । स्वच्छन्दप्रचारान् छन्दश्शास्त्रसिन्धौ प्रस्तारादिप्रकाशनबन्धौ। जैत्रचित्रचरित्रान् जैमिनीये रमणीये नये । श्रुतिमतश्श्रुतिमकुटेषु विशंकटेषु । कृतिमतः काणादे चाक्षपादे च वादे । मतिमतः पातञ्जले च सिद्धान्ते कापिले च राद्धान्ते । विख्यातवैभवान् वैद्यके विदलितविविधरुजाविद्यके। धारावाहिशेमुषीकान् धनुर्विद्यायां धन्विसमासाद्यायाम् । धारालपरिचयान् नृत्तवाद्यगानेषु सकलविनोदनेषु । व्यंग्यप्रधानानि नवरसनिधानानि अनुप्रासादिशब्दालंकृतिमन्ति उपमामुखार्थालंकरणवन्ति श्लेषादिगुणगणभरितानि वैदर्भीप्रभृतिरीतिनिभृतानि कैशिकीप्रमुखवृत्तिवृत्तीनि शंसनीयशय्यासदृशशय्यानि द्राघिष्ठद्राक्षापाकपरिपाकानि नैकानि दर्शनीयानि श्रवणीयानि च कमनीयानि नव्यानि कलितभव्यानि काव्यानि कलयतः । स्मृतीतिहासपुराणादिप्रवीणानन्यांश्च सम्मान्यान् संख्यातीतगुणान् संख्यावद्गणान् । हाटककटकविमलदुकूलग्रामकरितुरगाद्यैः हृद्यैरनवद्यैस्तत्तदर्हैः पारिबर्हैरानर्ह ।

अथ कञ्चित्कालं विदूषकादिनर्मसचिववेषभाषापरिहासवचोभिरानन्दितः कञ्चित्कालमवार्याणि राज्यकार्याणि विचार्य नानादिगन्तरागतव्यावहारिकव्यवहाराणां विविधधर्मशास्त्रपर्यालोचनापुरस्सरमारचितविनिर्णयः सकलजनश्रवणयुगसुखदं सायन्तनमंगलवादित्र

निनदं कर्ण्ययुगलेन गृहीत्वा।यथायथमखिलपरिजनानान्तत्कालमाननां कृत्वा। कौशेयप्रच्छदांबरात् कनकपर्यंकान्तरादुत्तिष्ठन्नवनीपतिः कल्याणाचलकूटादुद्गच्छन् सुधांशुरिव रराज।

उत्थाय ततस्स नृपवीरस्सभाजितसकलसभास्तारः पर्यंकादवरुह्य। परिजनहस्तं ससंभ्रमोदस्तमत्यन्तप्रशस्तमवलंब्य। समन्ततस्तपनीयदण्डाग्रसंघटितपरिमलजटिलस्नेहसंपूर्णराजतभाजनसमावेशितकार्पासतन्तुवर्तीसमुद्भासमानानि दिनान्तविनिर्यातजतमोजातनिवारणनिस्तुलकोलाहलानि दिवसकरकिरणपारणापीनतरज्वालानि दीपिकाजालान्यवलोक्य। यथासदाचारं सान्ध्यदीपावलिं विध्वंसितविपदालिमवनम्य। परिजनपरिदर्शितपद्धतिः वर्णनीयकुलचाररीतिः सकलसौख्यकारणं सायंसन्ध्याकर्म समनुष्ठातुं कति चित्पदानि परिक्रम्य शुद्धान्तःकरणश्शुद्धान्तमेव प्रविवेश।

तत्र सान्ध्यविधये यथाशास्त्रमाचमनप्राणायामपूर्वकमारचितसंकल्पः। वारिणा मन्त्रपवित्रितेन प्रोक्षितमस्तकः। पापवनकृशानुना मनुना मन्त्रितममृतान्निपीय। प्रकृष्टप्रसूनचयकरंबितमर्घ्यत्रयं ज्योतिषे जगच्चक्षुषे प्रदाय। साधकानुग्रहगृहीतपीतबहुलधवलधामानं विरिञ्चिनारायणशंकरनामानं परमात्मानं ध्यात्वा। विरचितनवग्रहादितर्पणः पृथिवीपतिर्जजाप जगन्मातरं वेदमातरम्।

जपावसाने कृतनित्यहोमः सार्वभौमः कमनीयं भोजनीयं भुक्त्वा। तल्पमनल्पं पौष्पबृन्दं सानन्दमासाद्य। पाणिगृहीत्या जगदसुलभरूपवत्या रतिमनुभूय। सुखपरवशस्सुष्वाप। सूरसूतोदयदलिततमोवार्ते ब्राह्ममुहूर्ते बुबुधे। चिन्तयामास चिन्तनीयतमान्धर्मार्थकामान्मनोऽभिरामान्। भावयामास भावुकचिन्तारत्नं भगवन्तं सप्रयत्नं। कीर्तयामास कीर्तनीयान् नैषधप्रष्ठान् पुण्यश्लोकवरिष्ठान्।

ददर्श दर्शनीयानि दर्पणाद्यानि हृद्यानि वस्तूनि । शुश्राव च श्रुतियुगपवित्राणि मंगलवादित्राणि ।

अथ समुदयमयति भगवति भास्वति । कलितव्यायामादिम-प्रातर्होमान्तिमनित्यकृत्यः सकलसन्तोषणीयविश्वंपराधिपत्यः विधृत-विविधवेषभूषाविशेषः विबुधजनलालनीयमनीषः खण्डितनृपमण्डली-महिमा पिण्डितगुणगणसीमा स राजराजः विशालं अतिदूरनिरस्तमा-यिकजालमास्थानतलं सलीलमविशत् । दीनात्मनान्दीनारमिव परि-षदास्ताराणां पण्डितवाराणां नयनानन्दममन्दमादिशत् । सौभाग्यभा-सनं सिंहासनमधिष्ठाय कया चित्क्रियया दण्ड्यानदण्डयत् । कयाऽपि विधया खण्ड्यानखण्डयत् । केन चित्कर्मणा मण्ड्यानमण्डयच्च । कञ्चित्कालं नन्दनीयमागन्तुकमत्यन्तरसिकं विद्वत्समाजं विद्यानैपुण्य भाजं दर्शन्दर्शमनन्दत्। तदीयं अनुपममानसप्रसादं षड्दर्शनीकोलाहलं श्रावंश्रावं परमामोदमविन्दच्च ।

इत्थमास्थानासनभाजि भागधेयविनिर्जितस्वाराजि सम्राजि । दुरधिगमतेजोविशेषविशदीकृतविश्वातिशायिब्राह्मण्यः भूदेववरेण्यः ल-क्ष्मणइव सुमित्रानन्दनः दशरथइव सुमन्त्रसारथिः रामइव दशरथा-ज्ञापरिपालनाभिरामः धनदइव मुकुन्दानन्दः वरुणइव प्रचेताः वायु-रिव शुचिसहायः ब्रह्मवर्धनाग्रहाराभिजनः कलितपरब्रह्मभजनः महित-तमशमदमभूमा महामोदनामा समाजगाम ।

नृपतल्लजोऽपि तं भूसुरपुंगवमालोक्य ससंभ्रममासनादुत्थाय कति चित्पदानि तं प्रत्युद्गम्य साष्टांगपातं प्रणनाम ।

महामोदोऽपि तदानीं "शुभकृच्छुभमाप्नोति पापकृत्पापम-श्नुते" इति श्लोकार्धमुच्चार्य सिन्दूरपरागचर्चितानक्षतानुर्वीपतिशिरसि साशीस्सूक्तं पातयामास ।

धरणीनायकोऽपि नमस्कृत्य सानन्दमुत्थाय वरीयसीं ब्रसीन्निवेद्य तस्यामादरेण तं द्विजराजमुपवेश्य स्वयमपि तदादेशेन स्वीयमासनमधितिष्ठन् अतिप्रह्वीभूतः तेन सह कञ्चित्कालमपापमालापमाचरितवान् । अद्भुतन्तदुदन्तं सभासद्भ्यश्च कथितवान् ।

सभास्तारा अपि तस्य महामोदस्य परमाकिञ्चन्येऽपि निरतिशयनिस्स्पृहतामकत्थन्त । के चन बुद्धिमन्तस्तदीयमाचारमशिक्षन्त।

तदनु महनीयमनःप्रसादो महामोदः सभासदश्शान्तिदान्तिक्षान्तिविषयविरतिपरैर्वचोभैररानन्द्य कञ्चित्क्षणं।अनुगृह्य सार्वभौममाशिषा मन्त्रजुषा। प्रतिगृह्य प्रभूतप्रार्थनावशाद्दुररीकृतपूर्वं सोपस्करममलतण्डुलप्रस्थपञ्चकम् । प्रीतिदानवशंवदहृदयो निजन्निकेतनं ययौ । कुटुम्बिन्यै च राजदत्तमखिलं वस्तुजातं विततार ।

गृहिण्यपि महामोदस्य तण्डुलादिकममलमनेकधा पपाच । बालकाश्च तस्य तदशनमदृष्टचरमुपभुज्य पराम्मुदमवापुः । सोऽपि मोदः प्रतिदिवसमेवमेव सत्प्रतिग्रहमादाय कुटुंबभरमनायासमभरत्तराम् । राजराजवर्मापि तद्दर्शनसुखमहरहरन्वभवदामोदेन नितरां ।

इत्थं गच्छति काले बहुतिथे । कदाचिद्राजवारणे च सिंहासनमलंकुर्वाणे । वसुमतीगीर्वाणे च महामोदे यथापार्थिवप्रार्थनमादातुमादानीयमयाचितोपनतमवनीशसत्प्रतिग्रहं । आगत्य सभामायतप्रभाम् । आख्याय "शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते" इति श्लोकार्धम् । आकीर्य शुभाक्षतानखण्डितानुर्वीपतिशिरसि । आसाद्य सुनिविहितमासनमतिमाहितम् । आकलय्य विद्वद्बृन्दारकैरनेकैरद्भुतार्थान् षड्दर्शनीमध्यगतानां सिद्धान्तवाक्यजातानाम् । विराजमाने विबुधगुरुनिर्विशेषम् । अमरपतिरिव सुमनोभिरामः धर्मइव सूर्यात्मजः वरुणइव सर्वतोमुखाधिपत्यमण्डितः कुबेरइव पुष्कलपुण्यजनेश्वरः कलियुगप्रतिभटकमनीयगुणगणकरम्बितः कर्ता निर्वाणहेतूनां क्रतूनां

संहर्ता सत्कार्यरहितानामहितानां पोषयिता सकलाना साधुशीलानां शोषयिता शोकानामस्तोकानां कथककुलकल्पद्रुमः कविजनकामधेनुः राजा काश्मीराणां कलिकोपो नाम यथार्थनामा नरपतिराजगाम राजराजमासेवितुमाखण्डलसमताभाजमवनीसम्राजम् ।

कलिकोपनामधेयः काश्मीरपतिर्ददर्श भक्तइव ।
कनकमयकीरमुपदां कुसुममिवादाय भूपमीशमिव ॥
कनकशुकमर्पयित्वा फलमिव राज्ञो गुरोरिवाभ्याशे ।
कलिकोपश्शिष्यइव प्राणमदाचार्यमिव सुराष्ट्रेशम् ॥
उत्थाप्य राजराजः कलिकोपम्मित्ररत्नमभ्यर्णे ।
उपवेश्यासनवर्ये कुशलप्रश्नादिकं स्वयं चक्रे ॥
कलिकोपराजराजौ प्रणयपुरस्सरमुदन्तमापृच्छ्य ।
पाण्डवगोविन्दाविव सन्तोषांभोनिधौ भृशम्मग्नौ ॥
मोदस्य वृत्तान्तमशेषमस्मै सख्ये समाचष्ट स राजराजः ।
उत्थाय सोऽपि द्विजमाननाम जग्राह चाशीर्निचयन्तदीयम् ॥

अत्रान्तरे का चन जानपदमहाजननिवेदनसूचिका महामदाभिधसचिवपाशदुरवलेपबोधिका पत्रिका प्रामाणिकप्रणिधिपरंपरया समागता दौवारिकेण समानीता जनपदाध्यक्षेण राजराजाय निवेदिता निकटस्थितेन परिजनेन समुद्घाट्य च सन्दर्शिता ।

राजापि तां पत्रीं स्वयमेव मनस्येवमवाचयत् "—स्वस्त्यस्तु श्रीमते तत्रभवते करुणानिधये परमपावनविधये महाराजाधिराजाय सुराष्ट्रराजाय राजराजाय वयमत्र भवदीये जनपदे कृतास्पदास्तमनुभूतत्वत्प्रसादाः विज्ञापयामस्साविनयञ्जानपदमहाजनाः । विज्ञापनमिदमास्माकीनं पुनरुक्तप्रायं भवति सर्वज्ञकल्पे सत्यसंकल्पे ।

राजन्राजन्यमौलिस्थितमकुटमहारत्ननीराजितांघ्रे
त्रैलोक्यस्याधिपत्यं त्वयि गुणसदने युक्तमाभाति सत्यम् ।

क्षोणीमेतां समस्तामवसि किल पुनर्यत्तदस्यास्तु भाग्यं
नह्यन्यस्त्वत्समत्वं नरपतिरवनौ याति यास्यत्ययासीत् ॥
रूपे कामं गुरुं बुद्धौ दाने श्रीदं यमं क्रुधि ।
गाम्भीर्ये जलधिं धैर्ये गिरिं त्वां नृप चक्षते ॥
अखिलगुणगणानामाश्रये चक्रवर्तिन्
त्वयि सति जगति त्वन्नैव वीक्षामहेऽन्यं ।
महितमणिगणानामाश्रये कल्पवृक्षे
लसति सति भजेरन् के नु किम्पाकवृक्षम् ॥

महामोदनामा महाब्रह्मधामा सिलोञ्छादिवृत्तिस्सितानन्तकीर्तिः ।
वितृष्णोऽपि विप्रस्तवातिथ्यमाप्नोद्गुणांभोनिधेस्ते किमप्राप्यमास्ते॥

स्मृत्वा राजंस्तव गुणगणान्मानसं नः प्रसन्नं
दृष्ट्वा कान्तं वपुरपि तव प्रीतिमेत्यक्षियुग्मम् ।
श्रुत्वा श्रोत्रे किल तव कथां गच्छतस्सार्थकत्वम्
ध्यात्वा सर्वं तव भुवि मुदं याति सर्वोऽप्यखर्वाम् ॥

तथापि कञ्चन कथयितुं विशेषं प्रगल्भामहे प्रकृष्टतावक-कृपादत्तहस्तावलम्बाः स्वयं वयमशेषाः ।

महामदो वंशपरंपरागतस्त्वया गृहीतस्सचिवश्च कारितः ।
स्वायत्तवृत्तेन तथापि सोऽयं राष्ट्रे स्वनामा तनुते यथार्थम् ॥

तथाहि—

साधून् द्वेष्टि जनान् खलान् फलवतस्सर्वान् करोत्यन्वहं
सत्कर्माणि विनिन्दति प्रतिदिनं गृह्णात्यनल्पं बलिम् ।
मान्यान्दण्डयति प्रपामपि हरत्यारामवाटीमपि
प्रोल्लुञ्छत्यनिशं द्विजानपहसत्यद्यापि मन्त्री मदः ॥
अमात्यपाशं मदनामभाजमुद्धृत्य मन्त्रीशपदादिदानीम् ।
मोदोपमानं द्विजमेव कर्तुं तस्मिन् पदे शौरिमुपासतेऽमी" इति।

अनन्तरमुपारूढमानसरुजो राजराजो विचिन्त्य महा-मदहुरवलेपं । विमृश्य जानपदमहाजनविलापम् । विगणय्य नियतिमशेषैरनतिलंघनीयगतिं महामदमपि हातुं परंपराकृतज्ञतया नापारयत् । मनसि च स्वयमित्थन्निरधारयत् " अन्वहमयमाभाषते त्रिकालवेदीव महामोदः सत्स्वपि मन्त्रेषु चतुर्वेदीपठनपाटनस्वतन्त्रेषु "शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते" इति श्लोकार्धम् । शुभ-कर्माणमिमं महामोदं वीक्षे दारिद्र्यदीक्षितम् । पापकर्माणममुं महा-मदमालोके सचिवपदप्रतिष्ठितम् । तदिदमर्धं श्लोकस्य वितथाभिधे-यमवितथाभिधेयं वा परीक्षणीयम्" इति ।

अथ च समाहूय नगरबहिर्द्वाराध्यक्षं कृतबहुवारनिजनिदेशा-करणपरीक्षं । अपवार्य तत्कर्णाभ्यर्णे " अहो द्वाराध्यक्ष यो वा को वा साधुर्वा तदितरो वा पुरोवर्तिनम्मनोहारिणं जातरूपमयमनल्पमूल्य-मिमं शुकमादाय मध्येनगरबहिर्द्वारमायास्यति । तत्क्षणमविचार्यैव किञ्चिदपि स तावच्छिरश्छेदनमर्हति' इत्याख्याय तञ्च तदानीमेव तदधीकारस्थानं प्रेषयामास ।

तदनु स चक्रवर्ती सखायं कलिकोपं काश्मीराधिपमनुगृह्य । सामोदमाश्लिष्य । सादरं तदीयां कमनीयामुपदामादाय । तस्मै विभवोचितमाभरणादिजातं वितीर्य । तञ्च स्वराज्यगमनाय विससर्ज ।

परीक्षणाय परार्थ्यस्य पूर्वोदितस्य श्लोकार्धस्य । निरीक्षणाय चापरिमेयस्य रमणीयस्य सुकृतस्य । करगतममलकनककीरं नैस्वृह्य-निवेशनायापि निरतिशयप्रार्थनातरलितमानसाय द्विजसारसाय महा-मोदाय प्रदाय यथायथं सभास्तारानपि विद्वद्वारान्वितरां तांबूलप्रसून-जालादिभिरभ्यर्च्य । गांभीर्यवशादिङ्गितादिभिरपि स्वाभिप्रायमनु-द्घाट्य । देवमेव स्वकर्मसाक्षिणं स्वचित्तवर्तिनं कल्याकल्यवेदिनं मनसि विचिन्त्य "जन्मनः प्रभृत्यनाविलकर्मणो मम न विप्रहत्यापापं

भविष्यति " इति धैर्यमहार्यमवलंब्य । द्विजकुलैरखिलैरभिवन्दनीयाय महामोदाय यथापूर्वमुत्थानकालकरणीयं प्रणामं चकार ।

मोदोऽपि गृहाय समुत्तस्थावासनात् । ततस्सर्वेऽपि ससंभ्रममुत्थाय निजसदनान्यगच्छन् । राजापि " भविष्यति किं वा महामोदस्य वा यस्य कस्य चिदन्यस्य वा " इति विचिन्तयन्नेव निवेशनान्तरेकान्तास्थानं प्रविश्य तत्रैव समस्तमाह्निककृत्यमन्वतिष्ठत् ।

महामोदोऽपि प्रतिगृह्य कीरं सौवर्णम् । निर्याय नृपास्थानात् । गच्छन्नेव मध्ये नृपास्थानस्य नगरबहिर्द्वारप्रदेशस्य च जनपदादागच्छन्तं जगतीपतिसदनमभिविशन्तं महामदनामानमश्रुतदृष्टपूर्वममात्यमालोकितवान् ।

अमात्योऽपि तं करकलितमहार्घकनकशुकं महामोदन्ददर्श । तमेवं साटोपञ्च पप्रच्छ "अहो ब्रह्मवर्धनाग्रहारराराट्यमानकीट दरिद्रधुरीण कथमलम्भि त्वयायं सौवर्णश्शुकः । किमधिनृपभवनमचोरि भवता " इति ।

तदनु मुनिजनवदपरिमितमनःप्रसादः समनिन्दास्तुतिर्महामोदस्तदधिक्षेपमविगणय्य । यथाधिगमं शुकाधिगममुवाच ।

तदाकर्ण्य मन्त्री च तं पुनरित्थमब्रवीत् "ब्राह्मण दरिद्रस्य तव कमर्थमयममलकनकशुकः कुर्यात् । सदनं नीतमपि शुकमिमं स्तेनास्त्वां सन्ताड्य स्तम्भे च बध्वा रात्रावपहरेयुः । तव कुटुंबिनी बालकाश्च किमनेन तृप्तिमधिगच्छेयुः । तदमुममात्याय मह्यमर्पय शुकं कस्मै चिन्महते मूल्याय " इति ।

ततस्तथेत्यूरीकुर्वाणे तद्वचनमवनीगीर्वाणे । महामदोऽपि तस्मान्महामोदात्कीरमादाय "विप्र कोशाध्यक्षाय पत्रिकामिमां प्रयच्छ स तावत्तुभ्यं प्रभूतानि धनानि दास्यति " इति गिरमुदीर्य तस्मै काञ्चित्पत्रिकान्ददौ ।

स महामोदोऽपि 'तथा' इति पत्रिकां प्रतिगृह्य कोशागारमधिगम्य कोशाध्यक्षाय तां प्रायच्छत् ।

कोशाध्यक्षोऽपि मन्त्रिनाममुद्रितां पत्रिकामुद्घाट्य वाचयित्वा यथालिखितं रूप्याण्ययुतमदिशच्च । आदिशच्च किंकरान् "अमुं ब्राह्मणं धनमदसीयञ्च शकटमारोप्य प्रापयत ब्रह्मवर्धनाग्रहारं" इति तेऽपि तथैव कृतवन्तः ।

महामोदोऽपि प्राप्य निजमुदवसितं । प्रोच्य कुटुंबिन्यै सर्वमुदन्तं । प्रदर्श्य धननिचयमिष्टेभ्यः । परिकल्प्य किंकरान् सत्कर्मशुश्रूषाधुरन्धरान् । सञ्चित्य च तैरापणादमलशालीयतण्डुलभारान् । आढकमुद्गमाषचणकगोधूमशर्करामरीचिलवणतिन्त्रिणीजम्बीरकदळीपनसरसालफलकुसुमगन्धपत्रिकाघृततैलप्रमुखमनेकवस्तुजातञ्च । आहूय च ससत्कारं द्विजाननेकानाग्रहारिकान् भोजनाय । पाचयित्वा सूदैरत्यामोदैष्षड्रसकरंबितानि नानाप्रकारयुतानि चित्रान्नजातानि लड्डुकाद्यानि खाद्यानि पायसपानकप्रभृतीनि पेयानि विचित्राणि शोष्याणि लेह्यानि च । भोजयित्वा च सानन्दमागतान् पङ्क्तिपावनानवनीसुरान् प्राज्यानि भोज्यानि । भुक्त्वा च स्वयमपि शिष्टजनभुक्तपरिशिष्टममृतोपममन्नमाश्रितजनैर्बालकैस्सज्जनसम्मानिन्या सह कुटुंबिन्या च । वर्णनीयाभिजनेन निखिलबन्धुजनेन साकमधिनिजगृहमुवास ।

आसन्ननिधनो महामदस्तु वञ्चनया महामोदान्महनीयं तापनीयं शुकमपहृत्य चेतस्येवमचिन्तयत् "यद्यहमनेन कीरेण सह राजानमीक्षेय । तदा मयि नृपतिर्वैरस्यमाभजेत् । विप्राय वितीर्णं कीरमपहृतवन्तम्मामधिक्षिपेत् । मामुत्कोचग्राहिणमाख्यातवतां पिशुनजनानां वचसि विश्वासमातनुयात् । मय्यपि कदाचिद्दीर्घवैरं कुर्यात् । तदहमाधाय करे कीरं । निर्याय बहिर्द्वारतः । प्रयाय शाखानगरम् ।

प्रविश्य तत्र राजमानं मामकीनं निवेशनम् । निधाय तत्र पेटिकायामिमं शुकम् । विधाय भोजनादिकम् । सायमेव राजानमीक्षिष्ये तदानीमेव जानपदमुदन्तञ्च कथयिष्ये" इति ।

एवं विचिन्त्य स दुर्मतिः करमध्ये कीरं कलयन् तदीयसौन्दर्यं सानन्दमालोकयन् । प्रतिष्ठमानः प्रति स्वीयसद्म । नगरबहिर्द्वारान्तरं प्रविवेश ।

द्वाराध्यक्षोऽपि कीरमादायागच्छन्तं महामदम्मन्त्रिपाशं दृष्ट्वा । नृपतेरादेशञ्च स्मृत्वा । नृपाज्ञावशंवदतया किमप्यविचारयन् कोशाच्च खड्गं सत्वरमुत्कृष्य । तं सकृदाधूय तेन मन्त्रिणो मूर्धानमच्छिनत् ।

मन्त्री च 'हाहा' इत्याक्रुश्य वृक्णो वृक्षइव पपात । रुधिरञ्च निरन्तरं ववाम । प्राणानपि विजहौ । द्वाराध्यक्षोऽपि मुमुदे । तदानीं भूमिस्सस्यवती जज्ञे । जलमाविलमपि प्रससाद । दिशोऽपि वितिमिरा बभूवुः । तत्रतत्र शुभानि निमित्तानि प्रादुर्बभूवुः ।

अनन्तरमध्यक्षो बहिर्द्वारस्य निधाय च्छुरिकामन्तरे कोशस्य । विधाय महागर्तान्तरे शरीरं सचिवस्य । उद्धृत्य मन्त्रिहस्तात्सौवर्णं कीरम् । विरच्य करतले तमनितरविज्ञेयम् । प्रविश्य राजनिवेशनम् । आलोक्य गृहान्तरेकान्ते स्थितं विश्वंभरापतिमन्तराकलितजगत्पतिम् । तत्पुरतः प्रदर्शितकनकशुकः कथयामास गिरमिमां "महाराज यथा भवान्मामादिष्टवान् तथाहं भवदादेशमनुष्ठितवानस्मि" इति ।

तदानीं स पृथिवीपतिर्दौवारिकवार्तामनार्तामप्यार्तां कलयित्वा कर्णयोः । लब्ध्वा मूर्छाम् । पतित्वा धरण्यामशनिभिन्नइव तरुः । बहोर्निमेषात्प्रतिपन्नसंज्ञः स्वात्मानमाकस्मिकविप्रहत्याकारिणमनेकधा विनिन्दन्नेवं विललाप " हा महाब्राह्मण महामोदाभिधान समधीतसांगोपांगसकलाम्नाय विद्याव्रतस्नात चतुर्दशविद्यानिष्णात सिलो-

न्छजीवित निस्पृहतालंकृत निरवद्यचरित निहतोऽसि निष्करुणेन मया । किं करिष्यामि । कुत्र गमिष्यामि । क्व वा वदिष्यामि । कथं वा ब्रह्महत्यामपनोत्स्यामि'' इति ।

इत्थं विलपन्तं महीकान्तं द्वाराध्यक्षस्सावेगमेवं व्यजिज्ञपत् "राजन् किमर्थमयसे शोकममहति भजनीये मोदे । नासौ निहतस्साधुजनकृतप्रसादो महामोदः । सतु कुशलवानेव वर्तते नितराम् । प्रागेव प्रहरात् । आरुह्य शकटं विशंकटम् । आसाद्य महतीं समृद्धिम् । ब्रह्मवर्धनाभिधानमात्मनीनमग्रहारमयासीत् । तस्य साधोर्न किमप्यत्याहितमुदपादि । अपितु निखिलमनुजारुन्तुदस्साधुक्रियाचन्द्रिकाविधुन्तुदः सचिवापशदो महामदः कलयन् कनकशुकमात्मीये शये। निवेशयन्दृष्टियुगमदसीये सौन्दर्ये । विभावयन् किमपि हृदये। मध्येद्वारमागच्छन्नालोकितो महाराजादेशवशंवदेन मया । निकृत्तश्च मध्येगळमसिना'' इति ।

तदाकर्ण्य राजा प्रशस्य प्रशंसनीयं महामोदं तदुदीर्णं "शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते'' इति श्लोकार्धञ्च । प्रकाश्य किञ्चिदात्मीयसचिवविनाशजनितमानने दुःखमीषत्कालम् । विचिन्त्य मनसि चैवं " ब्रह्मबन्धोराततायिनस्तस्य महामदस्य हननेन न किमपि मे दुरितं भविष्यति । स्याच्चेत्किमपि पातकम् । तर्हि यक्ष्ये हयमेधेन । दास्ये महान्ति दानानि दानीयेभ्यस्सद्द्विजेभ्यः । भजिष्ये भगवन्तं भवानीकान्तम् । सेविष्ये सेतुमखिलदुरितानिवर्तनहेतुम् । उपासिष्ये विष्णुमखिलपापानि निराकरिष्णुं'' इति । आहूय पौरवृद्धान् धनवयोविद्यासमृद्धान् । आवेद्य तेभ्यस्सर्वमुदन्तम् । आनाय्य मन्त्रिणः पुत्रादीन् बान्धवान् । कारयामास तैस्तस्य यथाशास्त्रमौर्ध्वदेहिकमखिलं विधिम् । श्रावयामास महाब्राह्मणमपलप्य तस्मै दत्तं कनकशुकमपहृत्य स्वयमेव पतंगसदृशम्मृतिमुपगतवतस्सचिवस्य सर्वं वृत्तान्तं पौ

रान् ग्रामीणान् आरण्यकान् जानपदांश्च सर्वान् साधुजनान् । उत्पादयामास सम्मोदमाबालगोपालमशेषाणाम् । निर्धारयामास तदानीमेव चेतसा "महामोदं मन्त्रिस्थाने स्थापयिष्यामि निर्बन्धेन येन केनापि इति । यापयामास च सुखेनैव तमहोरात्रम् ।

उदिते दिवाकरे गेलित तमोनिकरे जनिते जगत्प्रकाशे सञ्जाते समन्ततस्समस्तजनप्रवेशे । स क्षितिपतिरपि कृतपौर्वाह्णिकानुष्ठितिः विधृतकटकमकुटादिविभूषः विस्तृतविशेषसन्तोषः विविधपरिजनपरिवृतः विदलितजनपदसन्तापजातः सकलसभास्तारसंख्यावद्धारनिबिरीसां समस्तप्राड्विवाकादितत्तदाधिकारिकजननिबिडां साश्चर्यमास्थानीमासाद्य । सकलजनानामानन्दं कलयन् । यथाचारमाचार्यादीनां प्रणामादिकमारचयन् । आधिकारिकाणां "जय जय महाराज" इत्याद्याः कुलाचारसूक्तीर्गृह्णन् । सिंहासनमलञ्चक्रे ।

अथ महामदविनाशसञ्जातमहामुदः पुरग्रामवनजनपदसदो महाभिजना महाजनाश्च महामोदमेव महता प्रयत्नेन महिते सचिवास्पदे स्थापयितुं सकामास्ससंभ्रममाविविशुरास्थानम् । ददृशुश्च राजानम् । अध्यासामासुश्च निर्दिष्टानि यथाविभवमासनानि ।

अनन्तरमवनीसुरकेसरी महामोदो यथापूर्वमादाय शुभाक्षतानखण्डितान् । प्रविश्य भूपतेरास्थानीं राजानमद्राक्षीत् । राजापि तमालोक्य सिंहासनादुदस्थात् । सभास्ताराअपि ससंभ्रममुत्थाय यथायथं विविधैर्मनोहरैरुपहारैस्तमुपाचारिषुः । नृपोऽपि च तं श्रीपतिमेव मत्वा । पञ्चषाणि पदानि प्रत्युद्गम्य । साष्टाङ्गपातं प्राणंसीत् । स ब्राह्मणपुङ्गवोऽपि "शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते" इति श्लोकार्धमुच्चार्य नृपतेरुत्तमाङ्गे शुभाक्षतानपीपतत् । नृपतिरप्युत्थाय सादरं महति विष्टरे तमुपावीविशत् । स्वयञ्च तदाज्ञया सिंहासनमसेविष्ट । सभास्तारास्सर्वे नागरग्रामीणजानपदप्रमुखाश्च महामोदाभिमुखाएव स्वान्यासनान्यध्यासिषत ।

अथ निश्शब्दे सभाङ्कणे राजमानपरमशर्मा राजराजवर्मा समोदम्महामोदमित्थमप्राक्षीत् "भगवन् द्विजकुलमणे तत्रभवता भवता सूनोरिव मम मन्तुः क्षन्तव्यः। अतीते दिवसे प्रतिगृह्य कनकशुकं गतवता गृहं महितधिया त्वया यद्यदनुभूतन्तत्तदाचक्ष्व सविस्तरं" इति।

महामोदोऽपि तदापीय कर्णाभ्यां राज्ञो वचनामृतम्। यथाक्रमं प्रत्युत्तरमेवमदात् "राजन् भवता प्रतिपादितं हाटकशुकं प्रतिगृह्य विष्टरादुत्थाय करतलएव तमाकलय्य। सदनाय प्रस्थाय। त्वदास्थानाद्बहिर्द्वाराभिमुखं गच्छन्नहं मध्येमार्गं महामदेन मन्त्रिणा दृष्टः। 'द्विजाधम तव करस्थितः शुकः कथन्त्वया लब्धः। कुत्र वा चोरितः' इति।साटोपं पृष्टश्च।तदनु यथावत्कीराधिगमं कथितवन्तम्मां स मन्त्री पुनरप्येवमवोचत् " ब्राह्मण दरिद्रस्य तव किमर्थमयं शुकः। अनेन त्वत्कुटंबस्य का तृप्तिर्भविष्यति। नीतेऽपि गृहमस्मिन् रात्रौ चोरास्सन्ताड्य भवन्तमपहरेयुरेनम्। तदेनममात्याय मह्यमर्पय। वितरामि काञ्चित्पत्रिकाम्। एनां कोशाध्यक्षाय दिश। सोऽपि तुभ्यमधिकानि धनानि दद्यात्" इति। अनन्तरमालोच्यैव कञ्चित्कालं स्वयम्मत्या। तस्मै सचिवाय कीरं दत्वा। तद्दत्तां पत्रिकां प्रतिगृह्य। कोशाध्यक्षमधिगत्य तस्मै तां प्रायच्छम्। वाचितपत्रिकस्सोऽपि मह्यमयुतं रूप्याणि दत्वा। तानि च माञ्च शकटीमारोप्य। किंकरानपि सहायान् कृत्वा। मदीयमग्रहारं प्रापयत्। तदनन्तरमधिगृहमनुभूय नृपतिसुखमद्य प्रातरागमं यथापूर्वं" इति।

भूपोऽपि स्वयममात्यवृत्तान्तमशेषं तस्मै महामोदाय तेभ्यश्च महाजनेभ्यः कथयित्वा। पुनरपि सभायामशेषानालोक्य परमुच्चैरेवमुवाच "भोभोस्सभासदः ह्यः पुनरहमनेन द्विजन्मना कालिकोपेन

च सुहृदा विद्वद्भिरितरैश्च सह सुभाषितगोष्ठीसुखमनुभूयातिष्ठम् तदानीं काचन पत्रिका जानपदमहाजनेभ्यस्समागता । समीक्षिता पठिता च मनस्येव मया । तस्यान्तु "महामदेन सर्वत्र राष्ट्रे साधुजनहिंसा दुष्टजनप्रशंसा सत्कर्मद्वेषः तटाकारामप्रपादिशोषः उत्कोचग्रहणं उत्कृष्टक्रियागर्हणं अकथनीयमनाकर्णनीयममननीयञ्चान्यत्तत्र तत्र तन्यते। तस्य दुश्चरितं सोढुमशक्तास्तदास्पदे महामोदसदृशमन्यमेव सचिवेशं स्थापयितुमीशमेव प्रतिदिनं प्रार्थयामहे" इति वाचिकं विलिखितम् । तद्वाचिकार्थम्मनसि सम्यग्विचारयतस्सपद्येव मम महामदे परंपराकृतज्ञतापक्षपातलेशोऽपि निरगळत् । तदानीमेव जगतीसुकृतपरिपाकेन मद्भाग्यपरिपाट्या वा मम मनस्येवमस्फुरत् "अयम्महात्मा महामोदश्चतुर्वेदीपारगोऽपि विहाय महतो मन्त्रानितरान् मन्मूर्धनि शुभाक्षतपाताय "शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते" इति श्लोकार्धमुदीरयति। असौ ब्राह्मणपुंगवश्शुभान्याचरन्नपि कर्माणि रिक्ततमो विद्यते । महामदस्त्वशुभानि बहून्यनुतिष्ठन्नपि मन्त्रित्वमावहति । तत्कथमिदं श्लोकार्धं वितथार्थमुच्चारयेदयम्महान्। तस्मादिदमधुना परीक्षणीयं श्लोकार्धतात्पर्यं" इति । तत्क्षणं नगरबहिर्द्वारपालमाहूय । रहसि "रे द्वाराध्यक्ष साधुर्वा तदन्यो योवा कोवा कीरममुं सौवर्णमादाय द्वारमध्यमागमिष्यति तस्य तदैव किमप्यविचारयता त्वया शिरश्छेदः कार्यः" इत्युक्त्वा । तन्तदानीमेव द्वारदेशं प्रेष्य । भगवन्तमेव मन्मनस्साक्षिणं विश्वस्य । कनकशुकममुष्मै निस्पृहताशालिने महानिर्बन्धप्रवणचित्ताय महामोदाय प्रायच्छम् । अनन्तरवृत्तान्तस्सर्वोऽपि सर्वैर्भवद्भिर्विज्ञातचरएव । किमिदानीं कर्तव्यम्। भोभो जानपदा महाजनाः युष्मत्पुण्यपरीवाहेण भगवदनुकंपया च महामदो निधनमुपगतः । संप्रति भवदीयपत्रिकावाचिकमनुसृत्य महामोदसदृशस्य महापुरुषस्य जगत्त्रयेऽपि दुर्लभतया महामोदमेव सचिवपदे स्थापयितुमुन्मनीभवामि । यदि युष्माकमभिमतं

मदध्यवसितम् । तदुच्यतामनतिविलम्बेन प्रकटयत स्वस्वाभिप्रायमनुकूलं" इति ।

इत्थमाभाष्य विरतिमुपगतवति राजनि तत्रभवति । ये सभामध्यवार्त्सुस्ते सर्वेऽपि संघीभूय समुत्थाय । स्वस्वाशयञ्च सन्तोषसंवलितसाधुवादेन प्रकटीकृत्य । स्वीयेष्वासनेषु पुनरुपविविशुः ।

अथ सभासद्भिः पुरग्रामवनजनपदवासिभिः परममैकमत्यमधिगतवद्भिरखिलैस्सह राजा .वैराग्यसागरनिमग्नमपि भक्तिपरवशं महामोदमुरुतरप्रार्थनया स्वाधीनं स्वाभीष्टकरणप्रवणधियञ्च विधाय। सचिवपदे स्थापयामास ।

मन्त्रिपदे प्रतिष्ठितं कुबेरसमविभूतिम्मोदमाकर्ण्य जगति सर्वत्र काचिदनुष्टुबेवं जज्ञे "शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते । शिष्टः पुष्टिं ययौ मोदः पापः प्राप शुचम्मदः" इति ।

ब्रह्मवर्धनाग्रहारोऽपि प्राप्तसचिवपदस्य महामोदस्य निवासेन कुबेरपुरमिति पप्रथे ।

कमनीयकर्मा राजराजवर्मापि मतिविनिर्जितबृहस्पतिना महनीयनीतिना महामोदेन मन्त्रिद्विरदेन समधिगतसकलनृपातिशायिमहिमा सन्तक्षितसामन्तमहीपतिगरिमा समनुष्ठितहयमेधादिपरमयज्ञस्समीचीननानाग्रहारप्रतिष्ठापितबहुप्राज्ञः पृथिवीमण्डलं शशास चिरमत्याखण्डलमपरिमितमङ्गळम् ॥

वन्दे नन्दतनूजं निपीय यत्पादपद्ममकरन्दम् ।
भावुकमानसभृङ्गाः विस्मृतविषयान्तरास्सदा सन्ति ॥

**इति श्वेतारण्य नारायणशर्मणा रचिते गद्यकाव्ये कल्पितं महामोदचरितं समाप्तिमगमत् ।**

---

# ॥ जीमूतवाहनचरितम् ॥

वन्दे नन्दकिशोरं यत्पदयुग्मं नितान्तसंसेव्यम् ।
विषयाकृष्टमनोभिर्वैराग्ययुतैस्तथैव रागयुतैः ॥

जायते कस्य चित्पुंसः परदुःखासहिष्णुता ।
यया कीर्ति परामेति यथा जीमूतवाहनः ।

अस्ति सुरासुरवन्दितचरणनलिनायास्त्रिजगन्मातुर्गौर्याः प्रभवभवनम्।शंकरजटाकुटीरपरिभ्रान्तायाः प्रभूतभगीरथतपोमहिपरतन्त्राया स्त्रिपथगायाः प्रथमावरोहणभूमिः । किन्नरकिंपुरुषादीनां क्रीडासदनम् । सन्धानकरणीप्रभृतिदिव्यौषधीनां प्ररोहास्पदम् । कनकरजतादिविविधलोहानां पीतहरितावदातारुणनानाविधधातूनाञ्च निधिः । देवतात्मा हिमवान्नाम सकलसानुमतां सार्वभौमः ।

तस्मिन् नमेरुभूर्जप्रमुखशाखिजालप्रच्छायशीतळे गन्धहस्तिनामतिमहतां मदासारैस्सञ्जातपरिमळे मृगनाभिपंकिले धूनितवालपाशचमरीजाले मसृणतमशिलातले निरस्तसकलायासे विद्याधरनिवासे महनीयसुखालये हिमालये वाङ्मनसातीतविभवा सुकृतीतरदुरवापा विचित्ररत्नमयसौधमाला सुखैकभूः काचिदस्ति विद्याधरनगरी ।

तस्यामुवास शौर्यौदार्यधैर्यगाम्भीर्यसौन्दर्यादिगुणधाम जीमूतकेतुर्नाम महनीयकीर्ति विद्याधरचक्रवर्ती । तस्य लावण्यविजितमीनकेतोर्जीमूतकेतोरधिभवनमन्वर्थेन नाम्ना विख्यातः पितृपितामहादिक्रमादायातः सम्यक्पूरयिता सकलमनोरथानां आसीत्कल्पतरुः ।

स कदाचिद्विद्याधरपतिरात्मीयामारामवाटीमलंकुर्वाणं तमुपेत्यकल्पशाखिनं "अहो देवतारूप कल्पपादप भवतस्सकाशात्सर्वदा

सर्वाण्यभीप्सितान्यस्माभिरवाप्यन्ते किल । तस्मात्पुत्ररहिताय मह्य-मखिलगुणसागरं समर्पय तनयं " इत्ययाचत ।

इत्थमभ्यर्थितस्तेन राज्ञा स कल्पद्रुमः "राजन् भवतस्सर्व-भूतहितस्समुत्पत्स्यते जातिस्मरस्सततं दानवीरस्सुकुमारः कुमारः" इति तमवादीत् । सोऽपि तदाकर्ण्य प्रहृष्टमनास्तमादरेण पुनः पुनरा-नम्य तेनानुज्ञातस्स्वदयितामुपेत्य तदुदितां पीयूषमयीं गिरमावेदयन्नि-तरां तामनन्दयत् ।

तदनु तस्य विद्याधरपतेरचिरादेव वदनसुषमाजिततुषारभानुः सूनुरजायत । पित्रा 'जीमूतवाहनः' इति कृतनामधेय स्सोऽपि महासत्वः सहजया सर्वभूतानुकम्पया सह वृद्धिमुपगम्य क्रमेण यौ-वराज्यमधिगतः परिचर्यया निष्कपटया प्रसाद्य पितरमेवं विजने विज्ञापयामास "तात नश्वराएव सर्वे भावाः । केवलममलं यशः पुनरनश्वरम् । यत्किल परमुपकृतिपरम्परया समार्जितमुदाराणां प्राणाधिकं प्रियधनम् । सम्पत्पुनस्तटिदिव लोला लोकलोचन-खेदकारिणी च । या खलु परोपकारपदवीमनारूढा क्वापि गच्छति लयं । तस्मादस्माकमारामे यस्सकलकामदः कल्पविटपी । स चेदन्यार्थमुप-युज्येत तदानीमतिसमृद्धं यशस्समधिगतं भवेत् । तदहं तथा कर्तु-मिच्छामि । यथा कल्पतरोरस्य समृद्धिभिर्जगति सर्वाऽप्यर्थिजनसंहति-रदरिद्रा स्यात् " इति ।

इत्थं जनकं विज्ञाप्य तेनानुज्ञातस्स जीमूतवाहनस्स्वीयाराम गतं कल्पशाखिनमुपेत्य तमेवमवादीत् "देव कल्पतरो त्वमस्माक-मनिशमखिलानामभीप्सितफलानामासि दाता । सांप्रतमिदमेकं वाञ्छितं मम परिपूरय । एतामखिलां वसुधां दरिद्ररहितां कुरु । वित्तार्थिने जनाय मया दत्ताऽसि । स्वस्ति भवते भूयात् " इति ।

एवमतिधीरेण तेन दयालुना कथितस्स कल्पवृक्षः पृथिवीतले

तथा भूरि सुवर्णं ववर्ष । यथा सकलासु दिक्षु विदिक्षु च सुदूरपरास्तदौर्गत्याः सर्वाः प्रजास्तस्मिन् संजातानुरागास्सततं "बोधिसत्वावताराद्दयासागरात् जीमूतवाहनादन्यः कः सुकृती कल्पतरुमर्थिसात्कर्तुं शक्नुयात्" इति कथयन्त्यः तस्य शारदचन्द्रिकावदातां कीर्तिलहरीं वर्धयामासुः ।

ततस्सर्वदा रन्ध्रान्वेषिणस्तद्वंशजाः केचन जीमूतकेतुराज्यं पुत्रप्रथया रूढमूलमालोक्य समत्सराः प्राप्तविकृतयः "पूर्वमिदं राज्यमखिलकामदस्य कल्पतरोरास्पदं सप्रभावञ्च सज्जेतुं दुष्करमासीत् । इदानीमर्थिभ्यः प्रतिपादितेन तेन रहितं निष्प्रभावञ्च विजेतुं सुकरं" इति मन्यमानाः संभूय युद्धाय बभूवुः कलितमतयः ।

तेष्वेवं युद्धसन्नद्धबुद्धिषु धैर्यनिधिर्जीमूतवाहनः पितरमेवमुवाच- "तात यथा शरीरमिदं जलबुद्बुदसदृशम् । तथा संपदोऽपि प्रवातदीपचञ्चलाः । अस्य नश्वरस्य शरीरस्य कृते मनस्वी कः पुमानन्योपमर्दनेन तास्संपदः कांक्षेत् । तस्मान्नैव गोत्रजैस्सह योद्धुमहमिच्छामि । किन्तु राज्यमुत्सृज्य यत्र कुत्र चिद्वने वस्तुमभिवाञ्छामि । एते कृपणाः प्रतिपद्यन्ताम्मया परित्यक्तमिदं राज्यम् । माभूत्स्वकुलसंक्षयः" इति ।

इत्थममायमात्माभिप्रायमुक्तवन्तं सूनुमेवं कृतनिश्चयः पिता-जगाद "कुमार तारुण्यवतापि भवता स्ववंश्येषु कृपावशाद्विमुक्ते तृणइव राज्ये वृद्धस्य मम का स्पृहा । तन्मयापि गन्तव्यमेव गहनं" इति ।

तदनु जीमूतवाहनस्सभार्येण सह पित्रा राज्यमखिलसुखालयमपि निरयमिव निरस्य दक्षिणाशाविभूषणं चन्दनविटपिसंछन्नदेशं ताम्रपर्णीवीचिकणवाहिना पाटीरपरिमळपाटच्चरेण समी-

रकिशोरेण नर्तितलतालासिकं सिद्धानामावसतिभिरलंकृतम्मलयाचलञ्जगाम ।

तमधिगम्य तत्र स कुत्र चिद्गिरिनद्यास्तीरे प्रभूतपाटीरे । विरचितमतिसुन्दरमाश्रममधिवसन् । पितुः परिचर्यायां प्रसितोऽभूव ।

अथ तत्र तस्य जीमूतवाहनस्य मित्रावसुर्नाम सिद्धाधिराजस्य विश्वावसोस्सुतस्सख्यमुपजगाम ।

जातु चिदेकान्ते स जीमूतवाहनः कन्दर्पकलितामिव विजयवैजयन्तीं चाञ्चल्यरहितामिव सौदामनीलतां गृहीतरूपान्तरामिव रतिं असञ्जातपरिणयां मित्रावसोः स्वसारं स्वस्य जन्मान्तरप्रियतमामपश्यत्। तत्कालं तयोस्तरुणयोस्तुल्यमन्योन्यदर्शनं निजमनोहरिणजालबन्धनमभूत् ।

ततस्तयोरिङ्गितज्ञस्सञ्जातप्रीतिर्मित्रावसुरकस्मादिव कदाचित्तं त्रिजगत्पूज्यगुणगणमुपेत्य जीमूतवाहनमेवमभिहितवान् "सखे मम कनीयसी स्वसा मलयवती नाम विद्यते परिणयमप्राप्तवती तां भवतः पाणिगृहीतीमाकलय्य कृतार्थमात्मानमारचयितुकामस्य मम प्रार्थनामन्यथा माकृथाः" इति

तद्वाक्यमाकर्ण्य स जीमूतवाहनोऽपि तमेवमुवाच "युवराज पूर्वस्मिन्नपि जन्मनि सा मे भार्याऽभूत् । त्वमपि तत्र द्वितीयमिव हृदयं परमम्मन्मित्रमासीः । जातिस्मरस्य मे जननान्तरवृत्तमखिलमधिगतं स्मृतिसरणिम् " इति

तद्वचो निशम्य विस्मितचेतास्तदा मित्रावसुस्तमेवं पप्रच्छ "सखे पूर्वजन्मकथामस्माकमाख्याहि यतस्तामाकर्णयितुमतीव कौतुकवानस्मि " इति ।

एवमतिकौतुकेन पृष्टस्सुहृदा मित्रावसुना स सुकृती जीमूतवाहनः पूर्वजन्मकथामित्थं कथयितुमुपाक्रमत "सखे पूर्वस्मिञ्जन्मन्यभवं

कश्चिद्व्योमचारी विद्याधरः। तदा कदाचन तुषारशिखरिशिखरसरण्या गच्छन्नहमधस्तात्पार्वत्या सह क्रीडता भगवता मदुल्लङ्घनसमुद्भूतमन्युना पिनाकिना खण्डयतेव मदीयगगनसञ्चारावलेपपादपमेवमभिशप्तः "पाप दुरात्मन् विद्याधर यस्माद्व्योमगमनप्रवीणतागर्वान्मदुपरि निरर्गलमुल्लङ्घनमाकलितवानसि तस्मान्मर्त्ययोनौ पत" इति।

ततो मया प्रसादितस्स भगवानुमापतिरेवं शापावसानमुक्तवान् "विद्याधर समधिगतमनुष्यजन्मा विद्याधरीं भार्यामवाप्य स्वपदे सुतं नियोज्य पुनर्विद्याधरतां जातिस्मरस्त्वमवाप्स्यसि" इति।

अनन्तरमहमचिरेणैव कालेन महीतले वलभीनाम्नि नगरे महाधनाख्यस्य वणिजः पुत्रस्सञ्जातः पित्रा च वसुदत्तइति कृताभिधानः क्रमेण वृद्धिं गतः। ततः कालेन यौवनदशामारूढः पितुराज्ञया वाणिज्याय सह परिच्छदेन प्रभूतेन परार्थ्येन द्वीपान्तरं गत्वा पष्कलं धनमर्जयित्वा पुनर्निजनगरमागच्छन्मध्येमार्गमटव्यां बहुभिर्यमकिंकरसन्निभैस्तस्करैस्सन्ताड्य हृतसर्वस्वः स्वपल्लीं बध्वा नीतः। तत्र च लीलया पशुप्राणान् जिघत्सतः कृतान्तस्य जिह्वयेव दीर्घया रक्तांशुकपताकया भीकरं चण्डिकालयं प्रापितः। तस्मिंश्च पुलिन्दकाख्यस्य चण्डिकामर्चयतः स्वप्रभोरन्तिकं चण्डिकायाः पशूपहारार्थमुपनीतः।

मां पश्यत एव तस्य पुलिन्दनाम्नश्शबरपतेर्हृदयं आकस्मिकस्नेहवशादागामिनीञ्जन्मान्तरप्रीतिं सूचयदिव मयि दयार्द्रमभवत्। ततस्स शबरपतिर्मां बन्धान्मोचयित्वैव चण्डीपूजासमापनमात्मोपहारेण रचयितुमैच्छत्।

तदा चण्डिकापि द्विव्यया वाचा तमेवमब्रवीत् "पुलिन्दक मैवं कृथाः। महापुरुषस्य पुनरस्य वधमकृतवते प्रसन्नास्मि ते। मामभीप्सितं वरं याचस्व" इति।

तद्वाक्यमाकर्ण्य सम्प्रहृष्टस्स व्याधः प्रार्थयत देवीमेवं "भगवति यदि त्वं प्रसन्ना । कस्ततोऽन्यः प्रार्थनीयो वरः । तथापीदमर्थये। जन्मान्तरेऽप्यनेन वणिजा सह मे सख्यमस्तु" इति ।

ततस्तस्यां दिव्यवाण्यां "एवमस्तु" इति प्रत्युदीर्य शान्तायां मह्यमदभ्रमर्थं प्रदाय स पुलिन्दको मां निजगृहं प्रहितवान् ।

प्रवासान्मृत्युमुखाच्च प्रत्यागतस्य मम विदितसमस्तवृत्तान्तः परमानन्दनिभृतो मत्पिता नगरस्थितसकलदेवतानां महोत्सवान् कृतवान् ।

ततो बहुतिथे समये याते वलभ्यामेव निवसन्नहं कदाचित्तमेव शबराधिपं पुलिन्दकं सार्थद्रव्यापहरणवशात् बध्वा तत्र राजपुरुषैरानीतमपश्यम् । तत्क्षणमेव पितुरावेद्य राजानमपि विज्ञाप्य तदनुमतिमवाप्य तं पुलिन्दकं स्वर्णलक्षेण वधदण्डनाद्व्यमोचयम् । एवं तत्कृतप्राणदानमहोपकारस्य तादृशमेव प्रत्युपकारमारच्य कृतार्थमात्मानम्मन्यनानस्तमादरेण निजगृहमानीय सम्यक्सम्मान्य प्रैषयम् ।

सोऽपि शबराधिपस्सत्कृत्य सादरम्मया संप्रेषितः प्रेमनिर्भरं मानसं मयि निधाय स्वां पल्लीं प्रयातः । प्राणसंरक्षणोपकारस्य मया कृतस्य प्रत्युपकृतिमनल्पामारचयितुकामः मत्कृते स्वगृहस्थितं वस्तुजातं मौक्तिकमृगमदादिकमत्यल्पं पारितोषिकम्मन्यमानः प्रभूतं प्रकृष्टं करिकुंभप्रभवं मुक्तासारं लब्धुं धनुर्द्वतीयः करिणोहन्तुं गजानामाकरं हिमाचलं गतवान् ।

तत्र ततश्चेतश्च भ्रमन् विमलजलसनाथं देवतालयमण्डिततीरं मित्ररागिभिरात्मसदृशैः पंकजैरलंकृतं महत्सरः प्राप्य तत्र जलपानाय वन्यहस्तिनामागमनमाशंक्य तज्जिघांसया रहसि संछन्नशरीरस्सचापः स्थितवान् ।

तदानीन्तस्य सरसस्तटभुवि विराजमानं भगवन्तमुमाकान्त मर्चितुमागतां सिंहमारूढवतीं विस्मयकराकारां अपरां तुषारगिरिराजकुमारीमिव काञ्चित्कुमारीं दृष्ट्वा विस्मितमनास्स शबरः चेतस्येवमचिन्तयत् "केयमसदृशलावण्या। यदि मानुषी स्यात् तर्हि सिंहवाहना कथम् । अथ दिव्या भवेत् तत्कथं मादृशानान्दृश्या । तस्मादियम्मम चक्षुषोः पुरातनसुकृतानां नूनं मूर्तिमती परिणतिः । यदि संयोजयेयमेनया सह सखायं वसुदत्तं तदा स्यात् तस्य काप्यसदृशी प्रत्युपक्रिया कृता । तदिमां तदासक्तचित्तां विधातुमस्यास्समीपमुपसर्पामि " इति ।

एवमालोच्य मन्मित्रं स पुलिन्दकस्तस्यास्सविधमुपगम्य तां देवतामिव साष्टांगपातं प्रणम्य समुत्थाय तूष्णीमवस्थितवान् ।

सापि कुमारी । कस्य चित्तरोश्छायायां निषण्णात्सिंहादवतीर्य सरः प्राप्य पद्मान्यवचेतुमुपक्रान्ता । सनीडमुपगतमपूर्वं तमालोक्य शबरमतिथिप्रीत्या स्वागतप्रश्नेन प्रीणयित्वा "कस्त्वं किमर्थमिमामत्यन्तदुर्गमां भूमिमागतवानसि" इत्यपृच्छत् ।

एवन्तया प्रीतिपुरस्सरमनुयुक्तस्स पुलिन्दकस्तामेवं प्रत्युक्तवान् "अहं पुलिन्दकाख्यश्शबराधिपश्चण्डिकाचरणैकशरणः करिमौक्तिकहेतोरिदं गहनमागतोऽस्मि । त्वामपरामिव रमामालोक्य संप्रति मदीयः सखा प्राणदाता वलभिवास्तव्यस्सार्थवाहसूनुस्तरुणश्श्रीमान्वसुदत्तस्स्मृतिपथमुपारूढः । सोऽपि त्वमिव सौन्दर्यसंपद्भिरद्वितीयः । सकलस्य प्रपञ्चस्य नयनसुधावर्तिश्च । मैत्रीवितरणकरुणाधैर्यगांभीर्यादिगुणगणनिधिना तेन यस्याः कंकणवान् पाणिर्गृह्येत सैव कन्या लोके धन्या । तदनुरूपामिमान्त्वदाकृतिमनुगुणेन तादृशेन वरेण नसंयोजयन् कामश्चापं वृथा वहतीति मे व्यथा " इति ।

सापि कुमारी सपदि तादृशैः कन्दर्पसम्मोहनमन्त्रवर्णैरिव व्याधेन्द्रवचनैरपहृत्रमानसा चेतोभुवा च प्रेर्यमाणा "कुत्र ते मित्रमणिस्स द्रुतमानीय त्वया मे सन्दर्श्यतां" इति तं पुलिन्दकं साभ्यर्थनमुक्तवती ।

सोऽपि तद्वचश्श्रुत्वा । 'तथा' इत्युक्त्वा तामामन्त्रच । तदैव प्रहृष्टान्तःकरणः कृतार्थमानी च ततः प्रस्थाय । निजपल्लीमासाद्य तत्र स्थितं भारशतैर्हार्यं बहुस्वर्णलक्षमूल्यं मुक्ताकस्तूरिकाप्रमुखं भूरिप्राभृतमादाय गृहमस्मदीयमायातस्तत्रत्यैरस्मदादिभिरखिलैः पुरस्कृत्य सदनाभ्यन्तरं प्रवेशितस्समानीतन्तदखिलं मत्पित्रे निवेदितवान् ।

मत्पितापि तत्सर्वं प्रीतिपुरस्सरं स्वीकृत्य । तञ्च स्वागतादिना सम्यगानन्द्य । तस्य राजार्हेण बहुविधेन षड्रसकरंबितेन खाद्यपेयचोष्यलेह्येन लड्डुकपायसाद्यभ्यवहारविशेषेण सोपचारं सत्कारमतिथेरिव विरच्य । तत्प्रीत्यै तद्दिनमत्यद्भुतनृत्तगीतवाद्यकेलिमहितेन महोत्सवेन गमितवान् ।

सोऽपि शबराधिपतिरेकान्ते मह्यमामूलमावेदितकन्यादर्शनवृत्तान्तः 'सखे त्वरितमागच्छ तत्रैव गच्छाव' इत्युदीर्य सञ्जातस्पृहम्मामादाय निशायां स्वैरं प्रायात् ।

प्रातरनालोक्य मां मन्मित्रञ्च मत्पिता क्वापि शबरपतिना सह गत इति मत्वा तत्प्रीतिप्रत्ययाद्धृतिमवलंब्यातिष्ठत् ।

अहमपि बहुवारकलितगतागतेन मार्गविदा तरस्विना तेन पुलिन्दकेन तुषारगिरिं क्रमेण प्रापितः । यत्तीरे सा कन्या मन्मित्रस्य दृष्टिसरणिमुपगता तत्सरः सायमासाद्य तत्र स्नात्वा सचाहञ्च स्वादूनि फलानि तत्तटवनभवानि जग्ध्वा तत्सरोजलमतिविमलममृतरुचिरमापीय विकीर्णबहुळकुसुमपुञ्जैरकृत्रिमपुष्पतल्पायितैस्समलंकृते काननान

कल्पानामनल्पवल्लीमतल्लीनामधस्तने शीतलगन्धवहकिशोरसंयुते मधुकरिकाझंकारसङ्गीतमधुरे समन्ततः परिज्वलितमहौषधिदीपिके मनोहरकेलीसदनसन्निभे सरस्तीरप्रदेशे शयित्वा तामेकान्निशामतिसुखेन यापितवन्तौ ।

अन्येद्युः प्रतिक्षणमनल्पाभिस्तादृशीभिरुत्कलिकाभिरापूरितेन तन्मार्गधाविना मन्मानसेन प्रत्युद्गतेव । पदेपदे दिदृक्षयेव स्फुरता दक्षिणेनापि मच्चक्षुषा सूचितागमना सा कन्या तत्रागता ।

विशालसटाजालस्य केसरिणः पृष्ठमारूढां शारदजलधरोत्सङ्गसङ्गिनीमिन्दुकलामिव तां हरिणदृशमालोक्य तत्कालं मन्मानसं विस्मयस्पृहासाध्वसकिर्मीरं कीदृशीं रीतिमधिगतमिति न जाने ।

अथ सापि कन्यका सिंहादवतीर्य सरसि स्नात्वा विविधानि पत्रपुष्पाण्यवचित्य सरस्तीरगतं हरमपूजयत् ।

पूजावसाने स मे सखा पुलिन्दकश्च समुपेत्य सादरमानम्य स्वमावेद्य तामेवमवदत् "देवि वरस्त्वदनुरूपस्समे सुहृत्समानीतः । यदि दिदृक्षसे तदिदानीमेव तन्ते दर्शयामि " इति ।

तदमृतकल्पं वचनं निशम्य सानन्दं तया "त्वन्मित्रमाशु दर्शय " इत्युक्तस्स शबरपतिर्मां द्रुतमागत्य तदुदीरितमावेद्य तन्निकटमनयत् ।

सापि कन्या मां प्रणयरसस्राविणा नयनप्रान्तेन तिर्यगालोक्य कामावेशपरवशा सती तं शबरेशमेवमभिहितवती " व्याधनाथ नायं भवतस्सखा मानुषः । कामम्मद्वञ्चनाय देव एव कोप्यागतः । रमणीया दिव्येयमाकृतिः कथं मानवस्य जायेत " इति ।

तद्वाक्यमाकर्ण्य तां प्रत्याययितुमहं स्वयमेवमुक्तवानस्मि " अयि सुन्दरि सत्यन्मर्त्यएवाहं । सार्जवे जने किं व्याजभाषणेन । अहं तावन्महाधनाख्यस्य वलभीमधिवसतः सार्थवाहस्य

महादेववरलब्धस्तनयः । पुरा पुत्रार्थं शशिशेखरमुद्दिश्य महान्तमनेहसं तपस्तप्त्वा । तदा परितुष्टेन भगवता महेशेन स्वप्ने "महाधनतपसो विरम । महात्मा कोपि तनुजस्तव समुत्पस्यते । परममेतद्रहस्यम् । अलमत्र विस्तरेण" इति समादिष्टस्य । सविश्वासं तं भगवदादेशन्निशम्य सपदि प्रबुध्य तपसो विरम्य कालं प्रतीक्षितवतस्तत्रभवतः पितुर्महाधनस्य कालेनाहमात्मजस्समुत्पन्नः ख्यातश्च वसुदत्त इति । अयन्तु शबरपतिः प्राग्देशान्तरगतेन मया कदाचिदापद्बान्धवः स्वयंवरसुहृदधिगतः" इति ।

एवमात्मोदन्तं संक्षिप्य तत्वतस्संकीर्त्य विरतवचने मयि । सापि लज्जानम्रमुखी "महाभाग जाने सत्यमेवेदम् । यत्स्वप्ने यथावदर्चितवतीमिमां भगवानुमापतिः परितुष्टः प्रातर्भद्रे भर्तारमनुगुणं प्राप्स्यसि इत्यादिशत् । तत्त्वमेव मे भर्ता भवत्सुहृदयञ्च मद्भ्राता" इति वागमृतेन मत्कर्णयोस्तृप्तिं विधाय व्यरमत् ।

अथ तया तेन सख्या च सह सम्मन्त्र्य यथाविधि विवाहाय निजं गृहं गन्तुं कृतनिश्चयम्मां सा सुन्दरी वाहनभूतं तं सिंहं स्वसंज्ञया समाहूय 'आर्यपुत्र केसरिणमिममारोह' इत्यभाषत ।

तदनु तं मृगेन्द्रमारुह्य तान्दयितामुत्संगे कृत्वा तेन शबरेण सुहृदाऽनुयातः कृतकृत्यस्स्वीयं भवनं प्रति प्रस्थितः सुहृच्छरनिर्भिन्नहरिणमांसं मार्गमध्ये दयितया वयस्येन च सह संभुज्य क्रमेण वलभीं पुरीं प्रत्यागच्छम् ।

मान्दयितया समं सिंहमारूढमागतमालोक्य नगरवासी जनस्साश्चर्यः सत्वरं गत्वा मज्जनकायाब्रवीत् ।

सोऽपि हर्षात्प्रत्युद्गतः पञ्चास्यादवतीर्य सह दयितया सख्या च सभक्तिकं कृतपादवन्दनम्मां सविस्मयन्दृष्ट्वा परमाशीर्भिरभिनन्द्य । तामप्यनन्यसदृशीं मदुचितां दयितामवलोक्य हृदयगुहायाममान्त्या

मुदा परवशः प्रवेश्य मन्दिरन्तः समस्तमुदन्तमामूलचूडं च परिपृच्छ्य शबरपतिसौहार्दञ्च प्रशंसन् परममुत्सवं विहितवान् ।

अन्येद्युर्मौहूर्तिकादेशाच्छुभंयौ मुहूर्ते सकलबन्धुजनसंश्लाघिता महोत्तमलक्षणान्विता दुर्गुणलेशलेशेनापि रहिता सा वरकन्यका मया सकौतुकेन यथाशास्त्रं परिणीता ।

परिणयावसाने स मद्वधूवाहनसिंहः पश्यत्सु सर्वेष्वकस्मात्पुरुषाकृतिस्संपन्नः ।

विवाहाय समागते निखिले बन्धुजाले 'किमेतत्' इति सविभ्रमे दिव्यवस्त्रमाल्याभरणालंकृतस्स पुरुषः समुपेत्य मामेवमब्रोचत् " अहञ्चित्रांगदनामा विद्याधरः । इयञ्च कन्या मनोवती नाम मे प्राणाधिकप्रिया तनया । एनां सततमंके कृत्वा विपिनेषु चरन्नहमेकदा तीरद्वयविराजमानतपोवनां सज्जनमानसवदत्यन्तस्वच्छां पीयूषभानुबिंबवदवदातां कपिलमुनितपःपावकपरिप्लुष्टसगरतनयसुरलोकसमारोहणनिश्रेणीं भागीरथीमवापं । तामवाप्य तापसलंघनत्रासात्तत्तीरोपरितनपथेन गमनमुत्सृज्य तस्या मध्येन गच्छतो मे दैवात्पुष्पमाला तत्पयस्यपतत्। अन्तर्जले तपसे निमग्नेन तदानीमकस्मादुत्थितेन पृष्ठे निपतितया तया मालया कुपितेन नारदमुनिना " धूर्त विद्याधर त्वममुना समुद्धतेन स्वभावेन केसरी भविष्यसि । सुतामेताञ्च पृष्ठे वक्ष्यसि । यदा पुनरियं त्वत्तनया मानवेन परिणेष्यते तदा तस्य दर्शनादेव त्वमस्मात्सिंहभावाद्विमोक्ष्यसे " इत्यभिशप्तः सिंहीभूय हिमाचले हरपूजापरामिमां तनुजां वहन्नातिष्ठम् । अनन्तरमस्य शबराधिपतेर्महता यत्नेन यदस्माकमुत्पन्नमदभ्रं भावुकं तत्ते सुविदितमेव । तदहमुत्तीर्णशापस्साधयामि स्वं स्थानं। भद्राणि वस्सर्वदा सन्तु " इति ।

एवमात्मोदन्तमखिलमाख्याय । मनोवतीमनुरूपपतिमवाप्तवती-

मात्मसुतामानन्द्य । जामातरं सह दयितया कृतनमस्कारं गामाशिषा संयोज्य । पुलिन्दकमात्मशापमोचकमनेकशः प्रशस्य । महाधनञ्च सप्रणयमामन्त्र्य । स विद्याधरस्सपदि गगनमुत्पत्य तिरोभूत् ।

ततो मत्पिता महाधनश्च तद्विस्मयमालोक्य नन्दद्भिरखिलैरात्मबान्धवैस्समेतः प्रशस्यतमसंबन्धमुदितः शबरेशमनर्घरत्नोपायनादिभिरभिपूज्य परमम्महोत्सवमकरोत् ।

स्वप्राणैरप्युपकृतिमारच्य तृप्तिमनधिगच्छतां निर्व्याजसुहृदां चरितं जगति को नाम न चिन्तयेत् । यतस्तस्य शबरपतेः पुलिन्दकस्य चेष्टितमुदारं ध्यायंध्यायं वलभीवास्तव्यस्सकलोऽपि जनस्सचमत्कारमश्लाघत । तत्रत्यः क्षितिपतिरपि मत्तातेन सम्यगवबोधितस्तस्य शबरपतेस्सतीम्मतिं तदुपरि महतीमस्मत्प्रीतिञ्च विदित्वा नितान्तपरितुष्टस्तस्मै सर्वमटवीराज्यमददात् ।

अहमपि अव्याजसुन्दर्या सततमनुकूलधिया तया भार्यया निर्व्याजप्रीतिना विपिनराज्यपतिना तेन सख्या च कृतार्थस्सुखी च तस्यां वलभीनगर्यामवसम् । स पुलिन्दकोऽपि स्वभवननिवासरसमुत्सृज्य प्रायेण मद्विरहमसहिष्णुरस्मद्गृहेष्वेव न्यवसत् । एवं सर्वकालमन्योन्योपकारेषु बहुलेष्वप्यतृप्तयोर्मित्रयोस्तस्य मम च द्वयोः कालस्तावदगच्छत् ।

अचिरादेव मे तस्याम्मनोवत्यामजनि सुन्दरस्सुतः । अस्मत्कुलस्य कृत्स्नस्य बहिर्गत इव हृदयोत्सवस्स कुमारस्सजनकेन मया हिरण्यदत्त इति कृतनामधेयश्शनैर्वृद्धिमापद्य विद्यास्सम्यगधीत्य । यथाविधि गृहीतपरिशुद्धकुलसमुद्भूतकन्यापाणिरभवत् ।

मत्पितापि संपद्भिरमिताभिः पुत्रपौत्राभ्याञ्च महान्तं कालममन्दमानन्दमनुभूय स्वजीवितफलञ्च परिपूर्णम्मत्वा वार्धकमाधिगतसह दारैश्शरीरमुज्झितुं गंगां प्रायात् ।

तदनन्तरमहमतितरां पितृशोकपीडितः कथञ्चिद्बान्धवजनैर्ग्राहितधैर्यस्स्वगृहभारमभरम् । तदा पदेपदे स्मरणसरणिगतपितृविरहदुःखस्यापि मे मनोवतीमधुरमुखकमलदर्शनमेकतः शबरेन्द्रसंगतिरन्यतश्च बिनोदनसाधनमभवत् । ततः कालक्रमाद्विस्मृतपितृशोकेन मया सत्पुत्रसानन्दाः सत्कलत्रनिरवधिकसुखाः सन्मित्रसमागममनोरमास्ते महीयांसो दिवसा गमिताः । अथ कालेन स्वस्वचेष्टातन्द्रालुसर्वावयवं शब्दादिविषयग्रहणपाटवहीनसकलेन्द्रियं पलितंभावुकसमस्तरोमराजिं विगलितप्रायाशेषदशनं वृद्धभावमासन्नमहमपश्यम् । ततश्शनैः पलितव्याजेन कर्णसविधमागत्य 'पुत्र कृतमद्य गृहादिवासनया' इति प्रीत्या हितमुपदिशन्त्येव जरया गृहीतस्सहसा समुत्पन्नवैराग्यस्तनयं कुटुंबभारोद्वहने नियोज्य मोक्षकाम्यया सह मनोवत्या मत्सौहार्दपरित्यक्तराज्येन शबरराजेन च तपसे कालञ्जरगिरिमगच्छम् ।

तमचलमधिगतमात्रेण मया तावदात्मीया प्राक्तनी सा वैद्याधरी जातिरवसितप्रायश्शांकरस्स शापश्च सहसा स्मर्यते स्म । कथिततद्वृत्तान्तस्तदैव दयितायै सुहृदे च । मानुषीन्तनुम्मुमुक्षुस्सह ताभ्यां गिरिशिखरमारोहम् । तदारुह्य "भाविजन्मन्यपि जातिस्मरस्य मे भार्यासुहृदावेतावेव भवेतां" इति ससंकल्पस्ससन्तोषं भगवन्तमुमाकान्तं हृदये ध्यायन् साकं कलत्रमित्राभ्यां ततः प्रसभन्निपत्य शरीरममुञ्चम् । ततस्सोऽहममुष्मिन्विद्याधरकुले जातिस्मरस्संप्रति नाम्ना जीमूतवाहनस्समुत्पन्नोऽस्मि । स एव शबराधिपतिरधुनासिद्धाद्धिराजस्य विश्वावसोर्महेशप्रसादादुत्पन्नस्सूनुर्मित्रावसुर्नाम भवान् । सैव मनोवती सांप्रतं भवतस्स्वसा नाम्ना मलयवती जाता । एवमेष भवान्मम पूर्वमित्रम् । एषापि त्वद्भगिनी मत्पूर्वकलत्रम् । अतः परिणेतुमर्हैव । किन्तु मत्पित्रोः प्रथमं निवेदय यतस्सर्वेषामखिलकार्येषु शास्त्रमिव गुरवोऽपि प्रमाणम् । ततस्तयोः प्रमाणीकृतयोरसंशयं

भवदीप्सितं सिध्यत्येव" इति प्रियसुहृदे मित्रावसवे त्रयाणां पूर्वजन्मवृत्तान्तकथनपुरस्सरं अधिप्रकृतकार्यमितिकर्तव्यतामुपदिश्य जीमूतवाहनस्तूष्णीं बभूव ।

मित्रावसुरपि तदादेशन्निशम्य परितुष्टहृदयस्तत्पितरावुपेत्य तयोस्तदखिलमाख्याय ताभ्यामभिनन्दितनिजवचनः प्रीतिममितामापन्नस्तदैव स्वमातापितरावुपगम्य ताभ्यान्तमेवार्थमावेद्य तयोश्च 'काममियमस्मत्सुता मलयवत्यनुरूपपतिमवाप्स्यति' इति सन्तुष्टिमुरुतराममश्नुवानयोस्सत्वरं स्वसुर्विवाहाय संभारान् संभृतवान् ।

ततस्सकलेषु सिद्धविद्याधरेषु सम्मिलितेषु गगनचरेषु चारणनिकरेषु समागतेषु सिद्धाधिराजेन विश्वावसुना ससूनुना सत्कृतस्स जीमूतवाहनश्शुभे मुहूर्ते मलयवत्याः पाणिमग्निसाक्षिकं जग्राह ।

तत्र मलयाद्रौ यथाविधि कृतोद्वाहस्स वधूसखः प्रतिदिनमेधमानम्महोत्सवमनुभवञ्जीमूतवाहनः प्रभूततमेन महार्हेण विभवेन भरितस्सुखमासाञ्चक्रे ।

एकदा स तु सह स्यालेन मित्रेण मित्रावसुना वारिधेर्वेलाविपिनेषु विविधेषु चरन् कुत्र चित् एकमुत्तुङ्गमतिविपुलं शिलातलं गमयित्वा केन चिदनुयायिना भटेनेव पुरुषेण परित्यक्तं 'हा पुत्र' इति विराविणीं जननीं निवर्तयन्तं कञ्चिदुद्विग्नमानसं युवानमपश्यत् । 'कस्त्वं किञ्चिकीर्षसि कुतस्त्वामियं त्वन्माता शोचति' इति तमपृच्छच्च ।

एवं सकरुणं जीमूतवाहनेन पृष्टस्स पुरुषस्स्ववृत्तान्तमित्थं तस्मै कथयामास "— पुरा कद्रूर्विनता चेति कश्यपस्य द्वे भार्ये बभूवतुः । तयोरेका कद्रूरनेकान् शेषवासुकिप्रभृतीन्नागानसूत । अन्या विनता तु अरुणं गरुडञ्च प्रसूतवती । ते किल कदाचिन्मिथः कथाप्रसंगेन विवादञ्चक्रतुः । कद्रूश्चण्डरश्मेस्तुरगानसितानवर्णयदपरातु सितान् । तदा नागमाता गरुडमातरमेवमवोचत् 'अयि विनते

श्वः पुनरावामरविन्दबान्धवस्य हयाम्द्रष्टास्वः । यदि त्वदुदीरितमवितथमभविष्यत्तदाहमगमिष्यन्त्वद्दास्यं यदि सत्यम्मदुदितं तदा त्वम्मम किंकरी' इति । विनतापि तदाकर्ण्य "तथैवास्तु" इति प्रतिज्ञातवती । एवमन्योन्यदास्यरूपं पणबन्धमारच्य भगवतस्तरणेरुदयम् प्रतीक्षमाणे ते तस्थुतुः । कुटिलमतिः कद्रूस्तु स्वजयार्थिनी रात्रावेकान्ते निजसुतानाहूय "पुत्रकास्सर्वे यूयमर्कस्याश्वानतिकरालविषफूत्कारमलिनानाशु कारयत । ये तनुजेषु परिभूतमद्वाक्यास्तान् जनमेयसर्पसत्रे मृतिमुपयास्यतो विदांकुरुत" इति ताना्ज्ञापितवती ।

तदाज्ञां नागराजश्शेषः कर्तुमप्रगल्भमानः प्रसूशापभीत्या पातालाधिपत्यमपि परित्यज्य भगवन्तं रमाकान्तमाराध्य तत्तल्पतामुपजगाम । वासुकिप्रभृतयस्तु जननीवाक्यमाम्नायवाक्यवज्जगृहुः । सपत्नीसमुत्कर्षमसहिष्णुः कद्रूरपि वाजिनस्तरणेरात्माभिप्रायमंगीकृतवद्भिरात्मजैरात्मीयगरळफूत्कारमलिनानारच्य । विनतामपि सञ्जातस्वपक्षविपर्यासां छद्मना विजित्य । तां किंकरीञ्चकार ।

अनन्तरमवगतजननीप्रवृत्तिर्गरुत्मान् सत्वरमागम्य । साष्टांगमानम्य । ससांत्वं कद्रूं स्वमातुर्दासतामुक्तिमयाचत । सापि तद्वाक्यमाकर्ण्य । "गुरुत्मन् यन्मदात्मभवैरर्थ्यते । तद्वस्तु तेभ्यः प्रदाय । मातरमुन्मोचय दास्यतः ।" इति तमवोचत । तदनु गरुडोऽपि तद्वचनन्निशम्य तत्सुतान्नागानुपेत्य । "भोः पन्नगाः क वस्तु वाञ्छथ मन्मातृदास्यविमोचकं" इति तानपृच्छत् । तेऽपि नागाश्श्रुत्वा गरुत्मतो गिरम् । सुचिरं चिन्तयित्वा परस्परम् । वैनतेयमेवमब्रुवन् "भो विनतासुत सांप्रतं सकलसुरासुरैः सुधायै क्षीरवारिनिधिर्मथितुमुपक्रान्तः । ततः समुत्पत्स्यमानां सुधां बलवतामग्रेसरस्त्वमाहृत्य यदि नः प्रदद्यास्तदा भवन्मातरं विमुक्तदास्यामवगच्छेः" इति ।

विहङ्गमपतिरपि तदुदीरितमाकर्ण्य दास्यान्मातरम्मोचयितुमाबद्धकक्ष्यस्सत्वरमुपगम्य दुग्धांबुधि । सुधार्थमुरुतरमायासमप्यविगणय्य । समारब्धमथनानां गीर्वाणानाम्मध्यमाविश्य । पौरुषमात्मनीनं गुरुतरमधिमथनं दर्शयामास ।

अनितरसुलभेन तत्पराक्रमेण नितान्तमुदितः कैटभशासनस्तं "अहो पक्षिराज भवदीयं पौरुषमुदीक्ष्य तुष्टोऽस्मि । वृणीष्व कञ्चन वरं" इत्युदीरयामास ।

तदाकर्ण्य सोऽपि तार्क्ष्यस्स्वमातुर्दास्येन कद्रूसन्ततये सञ्जातकोपः "श्रीपते दन्दशूका मम भक्ष्या भवन्तु" इति परिपृष्टस्वाभीष्टवरः । श्रीपतिना च 'तथा' इत्यादिष्टः । स्वपौरुषेण शक्रप्रमुखानपि निलिंपान्विजित्य । मथनसञ्जातममृतमपि स्वायत्तमाकलयामास ।

विदितयाथार्थ्येन वलारातिना "पक्षीन्द्र यथा सुधा मूढैः पन्नगैर्न पीयेत । यथा च तत्सकाशतः पुनरेनां प्रत्याहरेयं । तथा करणीयं सुधिया त्वया" इति सादरमर्थितस्स विहगराजः । 'सुरपते भवदीरितमन्यथा नाचरेयं' इति तस्मै वितीर्णप्रतिवचनः पङ्कजाक्षवरलाभादतितरामुद्धतः पीयूषकलशमादाय नागानुपाययौ ।

नागाश्च तमानीतसुधाकलशमच्युतवरप्रभावादादीप्तमारादालोक्य भीतिपरवशाबभूवुः ।

तान्नितान्तभीतानाशीविषानवलोक्य स गरुडस्साटोपमिदमाबभाषे "भोभुजङ्गमाः मया पुनरिदममृतमानीतं । मुञ्चत मे मातरं दास्यतः पुरतः । प्रतिगृह्णीत सुधां ततः परतः । यदि मत्तस्साक्षात्तदधिगमे भीतिमधिगच्छथ । तर्हि तमिममममृतकलशममुष्मिन् दर्भसंस्तरे निधाय मातरमप्युन्मोचितदास्यां विधाय । गच्छामि । निर्भयमितस्सुधां स्वीकुरुत " इति ।

तैरपि 'तथा' इत्युक्ते सुपर्णः पवित्रतरे दर्भसंस्तरे विनिहितामृतकुंम्भः स्वजननीमतिविगीताद्दास्यान्मुक्तामारच्य यथेच्छञ्जगाम।

गते च गरुत्मति निश्शङ्कास्ते दन्दशूकास्तदमृतं यावदाददते तावदमरपतिस्सहसा समागत्य निजमायया तान्विमोह्य कुशसंस्तरतस्तममृतकलशमपहृत्य ययौ ।

तदनु विषण्णास्सुधापानलोलुपास्ते सर्पाः 'कदाचिदत्र सुधाबिन्दुलेपस्स्यात्' इति तन्दर्भसंस्तरं मुहुर्मुहुर्लिलिहुः । तेन च मुधा द्विधा समुत्पाटितरसनाः परिभवास्पदं केवलं द्विजिह्वभावमवापुः ।

अनन्तरं शकुन्तराजः प्रकामदर्पितः प्रवरेण वरेण विष्टरश्रवसः। प्रभूतमन्युरनासादितसुधारसानपरिमितत्रासान् पुनः पुनर्निपत्य भोक्तुं चक्षुश्श्रवसः प्रावर्तत ।

तस्य विहंगाधिपतेरापातमात्रेण पातालं निर्गलितगर्भिणीगर्भं त्रासनिर्जीवकिशोरस्थविरकुण्डलिमण्डलं चकितक्षुभितक्षपिततरुणफणिगणमभवत ।

अन्वहमेवन्तदापातमालोक्य फणिपतिर्वासुकिः कृत्स्नं नागलोकमेकपदे विनष्टप्रायं विचिन्त्य । तस्य शकुनिराजस्य वीर्यमपि दुर्वारमवगत्य । तमुपगम्य तस्य पुरतः सप्रार्थनं समयमेवमकरोत् "अहो पक्षीन्द्र भवदाहाराय प्रेषयामि प्रत्यहमेकमेकन्दन्दशूकम् । त्वया च वारिधिसैकतगते पर्वते स्थातव्यम् । भुजंगममर्दनप्रसितेन कदाचिदपि भवता तरसा रसातलन्न प्रवेष्टव्यम् । भवद्गरुद्वात्यैव केचित् प्रबलानामपि मादृशां फणाभृतां गणास्तृणवत्पलायन्ते। केचिद्विटपिवत्कंपन्ते । केचन तूलवन्न दृश्यन्ते । केचन पांसुवद्भ्राम्यन्ति। युगपदेव नागलोकं क्षपयतस्तवैव महती स्वार्थहानिः । ततः प्रतिदिनमेकैकं नागं प्रेषयितुर्मम । खादितुश्च तव । न प्रजाक्षयः नाप्याहाराक्षयः" इति ।

इत्थं वासुकिना प्रार्थनापुरस्सरमुदीरितं समयन्निशम्य । कि-

श्छिदुपरतकोपः पक्षिराजः 'तथा' इत्यंगीकृत्य । जलनिधेरिह वेलायां तिष्ठन् । अहन्यहनि नागराजप्रेषितमेकैकं पृदाकुमुपभोक्तुं प्राक्रमत ।

महता च कालेन यथासमयं राज्ञा प्रेरितास्समागताः फणिनामसंख्यास्संघाः प्रकाममतर्कितोपनतमिह निधनमुपगताः । अद्य तु शंखचूडाख्यस्य नागकुलोद्भवस्य मे वारस्संप्राप्तः । तदहमादेशेन राज्ञस्तद्भटप्रदर्शितसरणिर्गरुडाहाराय वध्यशिलामिमां प्राप्य मातुश्शोचनीयतामधिगतोऽस्मि" इति ।

एवं तस्य शंखचूडस्य वचनमाकर्ण्य परदुःखासहिष्णुरन्तरमितखेदस्स जीमूतवाहनस्तमेवमुवाच "अहो बत वासुकेर्नागराजस्य राजता सत्वगुणगन्धेनापि रहिता । यदात्महस्तेनैव स निजप्रजाः शत्रोरामिषतां नयति । यत्प्रथममात्मैव तेन गरुत्मते न समर्पितः । यच्च क्लीबेन तेन निजकुलक्षयसाक्षिता परमभ्यर्थिता । अहह महतामपि देहमात्रजीवननिर्वहणे महान्व्यामोहः । यत स्स ताक्ष्योऽपि भगवतः कश्यपतस्समुत्पद्य कुरुते दुरितमीदृशम् । अथवा किमेतेन मे तदुपालंभेन । सखे शंखचूड मा विषादं गमः । संप्रति मदीयशरीरदानेन भवन्तमहं गरुत्मतः परिरक्षामि" इति ।

तदाकर्ण्य शंखचूडोऽपि कर्णौ पिधाय "शान्तं पापं । महासत्व मा स्म पुनरेवं वोचः । न युज्यते खलु जातु चिदपि काचस्य कृते मौक्तिकमणेः क्षतिः । नापिचाहमेवमुत्पादयिष्यामि विमलस्य नागकुलस्य कलंकमपूर्वं ।" इत्यादीनि वचांसि श्रावयन् । महामनसं तं जीमूतवाहनमात्मप्रतिनिधीभावान्निषिध्य । गरुडागमनवेलां क्षणान्तरभाविनीं परिकलय्य । "अन्तकाले दर्शनमन्तकारेरसुलभमकृतसुकृतानां । इदमभ्यर्णे गोकर्णाख्यमुमापतेः क्षेत्रमंबुधितटगतं । अत्र भवान्या सह भगवान् पशुपतिस्सदा सान्निध्यमावहति । सुरासुराश्च प्रत्यहमत्रागत्य देवदेवमासेव्य परममितरदुरवापमधिगच्छन्ति निश्श्रेयसं । तदहमप्यस्मिन्नन्तरे गोकर्णमाविश्य महेशमालोक्य लो-

कान्तरपाथेयं किमपि पुण्यमार्जयेयं" इति कृतमतिर्गोकार्णञ्जगाम ।

भगवति चन्द्रचूडे भक्तिमति शङ्खचूडे गतवति । स करुणा निधिर्जीमूतवाहनः स्वशरीरं शुकुन्तपतये समर्प्य साधुर्न्तमाभिरक्षितुमन्तरमुपलब्धमिति बुध्वा । स्वयुक्तितः पूर्वक्षणवृत्तं विस्मृतमिव द्रुतं कृत्वा । स्यालम्मित्रावसुमपि कार्यापदेशेन गृहं प्रेषयामास ।

तस्मिन् क्षणे समासन्नस्य वैनतेयस्य पक्षवातवेगेन समाहता वसुधा गिरीनपि कम्पयतः तरूनपि पाटयतः पक्षिणोऽपि पातयतः सागरमपि क्षोभयतः तत्पक्षपवनस्य बलमभितस्समीक्षितुमिवाघूर्णत ।

तथाविधेन वसुधाकम्पेन सर्पान्तकमागच्छन्तमालोच्य परदुःखमसहमानस्स जीमूतवाहनश्शङ्खचूडस्य प्रतिनिधितामवलम्बमानस्तां वध्यशिलामारुरोह ।

गरुडोऽपि निजच्छायासंछादितगगनांकणः क्षणात्तत्र निपत्य। महासत्वन्तमविकृतमुखमात्मीयमहनीयकायपरिरक्षणपराङ्मुखमाहत्य भीषणया चञ्चा समुद्धृत्य । निखिलांगस्यन्दमानशोणितधारासन्दोहं विगलितसमुत्खातचूडारत्नमेनं शिखरिणश्शिखरोत्संगदेशन्नीत्वा । भक्षयितुं प्रववृते ।

तस्मिन्नवसरे बृन्दारकबृन्दकरारविन्दसोल्लासविकीर्णा मन्दारपारिजातप्रभृतिसुरतरुप्रसूनवृष्टिरमन्दा नभस्स्थलात्तस्य महात्मनश्शिरसि निपपात ।

तामुदीक्ष्य किन्वेतदिति सविस्मये सौपर्णेये तावत् स शंखचूडोऽपि भगवन्तमधिगोकर्णमपर्णाकान्तमासेव्य । विना विलंबमागतश्शोणितधारासिक्तं वध्यशिलातलमालोक्य । "हा हा धिग्धिगनार्यमवार्यदुरितम्माम् । महात्मना तेन नूनमात्मा मदर्थं वैनतेयाय वितीर्णः । सोऽपि तत्रभवानस्मिन् क्षणे तेन पन्नगाशनेन कुत्र नीतः स्यात् । त्वरिततरन्तावन्मार्गयामि विधुमिव सन्मार्गयातं कलितकुवलयानन्दं तं साधुम् । कदाचित्तमधिगच्छेयम् । न पुनरस्मत्पूर्व-

रुषैरनार्जितामपूर्वां कुलकलंकितामार्जयेयम् ।" इति बहुविधं विलप्य । तद्रक्तधारासरणिमनुसरन् ससार ।

तस्मिन्नन्तरे गरुडोऽपि निजचञ्चुप्रहारजर्जरशरीरमप्यविकारवदनमानन्दतुन्दिलममेयमहिमानं जीमूतवाहनं विवर्ण्य । प्राप्तावसरं भक्षणमपि परित्यज्य सविस्मयमेवमचिन्तयत् "दृष्टमात्राएव मया महाबलाः पन्नगाः कदाचिदपि जीवितन्धारयितुमनलम् । अयं पुनरतिधीरः सुतरामाहत्य निर्दयम्मया भुज्यमानोऽपि नहि विपद्यते प्रत्युत निर्विकारस्तुष्यति । किमयमरातिकुलजादन्यः कश्चित्कस्यचित्प्रतिनिधिर्भवेत्" इति ।

इत्थमन्तरालोचयन्तं नागान्तकं तादृग्विधस्सजीमूतवाहनस्स्वाभीष्टसिद्धावन्तरायमूहमानस्सधैर्यमुवाच "पक्षिराज मम शरीरे प्रभूततरं मांसरुधिरमवशिष्टं त्वदभीष्टमस्त्येव । न गतोऽसि तृप्तिमप्यभ्यधिकाम् । तस्मादकस्मात्किं भवसि भक्षणान्निवृत्तः" इति ।

पक्षिराडपि तद्वाक्यमाकर्ण्य नितान्तमाश्चर्यपूरितस्वान्तस्तं पप्रच्छ "महात्मन् नहि तर्कये भवन्तमस्मदरिकुलजनुषमाशीविषम् । कथय याथातथ्यम् । कस्त्वं" इति ।

एवमनुयुक्तस्सोऽपि विपन्नपरित्राणमहासुकृतेच्छुः किञ्चिदानुषंगिकमनृतभाषणमपातकमिति मन्यमानः "शकुन्तपते सत्यमुरगएवास्मि । यथाकाममिममुपभुङ्क्ष्व । प्रक्रान्तं कर्म समापय । नहि धीरैरुपक्रान्तं कार्यमसमाप्तमुत्सृज्यते" इति यावत्तत्प्रतिवचनन्ददाति तावत्स शंखचूडोऽपि तत्सरणिमतिद्रुतमन्विष्यन्ननतिदूरमागतस्तयोरुक्तिप्रत्युक्ती समाकर्णयन् गरुत्मन्तमित्थमुच्चैरूचे "गरुत्मन्नैवायं नागः । साधुः कश्चिदापन्नार्तिमसहमानः । तदेनमुत्सृज । मा भक्षय । कोऽयमकाण्डे भवतोऽपि बत महान् भ्रमस्सञ्जातः" इति ।

खगराजोऽपि शंखचूडसमीरितन्निशम्य नितान्तविभ्रान्तो बभूव ।

जीमूतवाहनोऽप्यसिद्ध्या निजवाञ्छितस्य परामार्तिमापन्नः "सखे शंखचड स्वशरीरदानेन भवन्तमभिरक्षितुमाबद्धकक्षस्य विद्याधरकुलजातस्य जीमूतवाहनस्य मम समीहितस्यालाभेन यथा बिषीदामि न तथा विद्याधरसाम्राज्यसमुत्सर्गेणापि" इति विललाप ।

शंखचडोऽपि "महात्मन् विद्याधरपते निष्कारणबन्धुना भवता समीरितं स्वशरीरार्पणसाहसं प्रतिषिध्य गरुत्मतस्समागमनविलंबमाशंक्य भगवतः कालकालस्य दर्शनाय समीपस्थितं गोकर्णक्षेत्रं प्रविश्य यावदागच्छामि। तावदेतादृशीमवस्थामधिगतवानसि। धिङ्मामीदृशस्य महापुरुषस्य भवतो निर्निमित्तविपत्तेर्निदानभूतम् । कथंवा निष्कृतिमेतस्य दुरितस्य रचयेयं" इति बहुतरमाक्रन्दन्नात्मानन्निनिन्द ।

अनन्तरमुरगान्तकोऽपि तयोरन्योन्यालापं श्रुत्वा विद्याधरपतिं मोहाद्भक्षितं बुध्वा भृशं तप्यमानः "अहो बत नृशंसतमस्य मम पापमितरदुरवापमतार्कितमिदमुपनतं । अथवा दुर्मार्गवृत्तीनां दुरितमदुर्लभमेव संभवति । परार्थप्राणदाता निष्कारणबन्धुर्महानयमेक एव जगति प्रकामं प्रशस्यः । येन विमलगुणगणधाम्ना मोहैकपरवशमिदं विश्वमधः कलितं। अन्तरेण वैश्वानरप्रवेशममुष्य महात्महिंसनसमुद्भूतस्य शुद्धिरंहसः प्रभूतस्य भविष्यति" इति मनसि विचिन्त्य परमं निर्वेदमाप ।

एवं निर्विण्णमुपार्जितस्य दुरितस्य निवृत्तये जातवेदसं बिविक्षुं विनतासुतं जीमूतवाहनस्स दयालुरित्थमुवाच "पक्षीन्द्र निर्विण्णो विषण्णश्चासि । यदि सत्यमेनसो बिभेषि । न तर्हि भूयोऽपीदृशं दुरितमुपार्जनीयं । भुजङ्गमाश्च पुनर्न ते भक्षणीयाः । भुक्तचरेष्वपि तेषु भोगिषु भृशमनुशयस्त्वया करणीयः । एष एवात्र महान् प्रतीकारः । तव चिन्तितमन्यथा वृथा" इति ।

एवमखिलेषु भूतजातेष्वनकम्पावता तेन समुदीरितस्स तार्क्ष्यः प्रकामप्रीतस्तस्य तद्वचनमाचार्यस्येव 'तथा' इति प्रतिपद्य । क्षताव-

यंव तं कंकालशेषानन्यानप्यहीन् त्वरितमुज्जीवयितुम् । त्रिविष्ठपादमृतमानेतुं जवेन जगाम ।

तत्रान्तरे जीमूतवाहनं विहाय गृहमागतं मित्रावसुमालोक्य तद्भगिनी भगवत्यां भवान्यां अतितरां भक्तिमती मलयवती दुर्निमित्तानि बहून्याकालिकानिअवामाक्षिस्पन्दनादीनि समनुभूय । 'किमेकाकिनस्सञ्जातम्मद्दयितस्य विपिनतले किमप्यत्याहितम् ।' इति विशंक्य । संक्षेपेण भगवत्याः पूजादिकमारच्य । भवानीकृपामापद्कूपारनौकां विश्वस्यापि । व्याकुलमानसा साकं भ्रात्रा मातापितृभ्यां श्वश्रूश्वशुराभ्याञ्च भर्तारमन्विष्यन्ती ततश्चेतश्च । त्वरिततरमाधाव्य तद्गिरिशिखरसविधमासाद्य तथाविधन्दयितमुदीक्ष्य । सञ्जातमूर्छा निकृत्ता वल्लरीव भुवि निपपात । तामनुगताः परे मित्रावसुप्रभृतयोऽपि तद्रीतिमेवानुसस्रुः । तदनु समुत्थातुमशक्तस्य भक्षितावशिष्टकतिपयावयवस्य सख्युर्जीमूतवाहनस्य वितत्तेर्मूलमात्मानमाशंकमानश्शंखचूडस्तान् प्रियसुहृद्बान्धवान् ससंभ्रमं शैत्योपचारैराश्वासयामास ।

अथ चिरादाश्वस्तास्ते जीमूतवाहनमालिंग्य 'हाहा हतविधे किमाकालिकम्मृत्युमस्य प्रदिष्टवानसि । कथमस्य शरीरमवशिष्टकतिपयांगमुपजातम् । किमिदमस्माकमापतितन्दुर्भाग्यम् । किन्नश्छिन्नासुचरितलता ।' इति विविधं विलपन्तश्शंखचूडेन कथितं यथावृत्तमुदन्तं शृण्वन्तस्सान्द्रतरबाष्पापिहितकण्ठास्सगद्गदं किमपि किमपि जल्पन्तश्चक्रन्दुः ।

समतीतेषु कतिपयेषु क्षणेषु दयिते च समुत्क्रान्तप्रायजीविते। पतिव्रताशिरोमणिर्भवानीचरणसरोसिजयोर्भक्तिमती मलयवती विश्वस्य भगवतीम् । विधूय तीव्रशोकम् । अवलंब्य धैर्यमवार्यं भर्तुरक्षताखिलांगस्य सम्यगुज्जीवनाय, गौरीमन्तर्यागक्रमेण यथाविधि सम्यगाराधयामास ।

अचञ्चलभक्तेस्तस्याः परया मानसिकपूजया परमां प्रीतिमुपगता मृडानी साक्षादागत्य जीमूतवाहनममृतधारया सिषेच ।

तत्क्षणममृतधारासिक्तस्य तस्य सर्वाण्यंगानि यथापुरमक्षतानि पूर्वाधिकतरसमुज्ज्वलकान्तीनि च सह सानन्दवृन्दारकवन्दामन्ददुन्दुभिध्वनिभिस्संजज्ञिरे ।

तदनु स्वस्थोत्थिते जीमूतवाहने । भगवत्याञ्च हैमवत्यां मलयवतीं 'अयि भक्ते नचिरात्ते दयितः स्वीयं विद्याधराधिपत्यमुपैष्यति। पौलोमी पुरन्दरमिव सततमात्मीयैरमलगुणनिचयैरानन्दयिष्यसि भर्तारं । अभीप्सितमप्यनितरसुलभमधिगमिष्यसि मद्भक्तिमहिम्ना' इति समनुगृह्य तिरोहितवत्याम् । गरुडोऽपि सुरलोकादमृतमानीय । गगनगतएव निखिले वेलातटे तदभिवृष्य । बहूनहीनुज्जीव्य । जीमूतवाहनमपि भृशमक्षताङ्गमानन्द्य । पन्नगेभ्यः परमभयं वितीर्य । जीमूतवाहनइव सर्वभूतसमावेशितकरुणः स्वयं यथेच्छञ्जगाम ।

गतवति गरुडे पीयूषधारासेकसम्प्राप्तजीवितैस्सुप्तोत्थितैरिव प्रभूतैर्भुजङ्गमजातैस्संकुलं विगलितविनतातनयभयं तद्वेलावनं जीमूतवाहनस्य महोपकारकारिणः सन्दर्शनाय समागतं पातालमिव रराज ।

निस्तुलकान्तिना नितरामक्षयेण वपुषा यशसा च विराजमानं जीमूतवाहनमालोक्य निखिला बन्धुता परममानन्दमविन्दत । तस्य पितरौ श्वशुरौ मित्रञ्च मलयवत्यास्सौभाग्यं गौरीभजनञ्च तदपमृत्युनिवारणनिदानमाशंक्य तां प्रशशंसुः । मलयवती च गिरिजापदसरोजभजनफलमविकलमवाङ्मनसगोचरमवबुध्य ततः प्रभृति भर्तुरात्मनस्समस्तबान्धवानामप्यारोग्यकाम्यया विशेषतश्चराचर जनन्याश्चण्डिकायाः पूजनमाचचार ।

शंखचूडोऽपि सुधासेकसमुज्जीवितैस्स्वकुलजव्रातैः परिवृतस्सखायमरोगकायमापन्नबन्धुमनुकम्पासिन्धुमपारसन्तोषसागरनिमग्नसिद्धविद्याधरकुलीनसकलबन्धुजनञ्जीमूतवाहनन्दृढतरमाश्लिष्य ।

सादरभरमानम्य । सन्तोषवाष्पमामुच्य । विश्लेषशोकपिशुनेन गद्गदध्वनिना मन्दमापृच्छच । तेन च सखिवियोगदुःखमसहमानेन कथं कथमपि विसृष्टः । पुरोगच्छता तत्प्रेषितसहायेनेव तदीययशसा प्रदर्शितसरणिरिव पातालमयात् । तत्रत्यानखिलानात्मबन्धूश्च विदितवृत्तान्तान्निर्भीकस्वान्तानकरोत् ।

हिमगिरितनयाप्रसादपात्रभूतं जीमूतकेतुसुतमवगत्य हिमाचलवास्तव्यास्तद्दायादास्सुचिरमुपारूढामात्मीयां तद्विषयां विकृतिं विमुच्य । सभयास्सत्वरम्मलयशिखरिणमागत्य । विद्याधरतिलकन्तमतिवेलविनीतयः प्रणेमुः । 'जीमूतवाहन जीमूतवाहनस्त्रिदशाधिपत्यमिव भवानेव विद्याधराधिराज्यमर्हति' इति निर्मायञ्च प्रार्थयामासुः ।

तैरेवमभ्यर्थितः त्रिजगद्विख्यातकीर्तिः परदुःखासहिष्णुप्रकृतिर्धन्यस्सकलजगन्मान्यस्स जीमूतवाहनश्श्वशुराभ्यामाशीर्वादपुरस्सरमतिकृच्छ्रादनुमतस्सह पितृभ्यां सुहृता मित्त्रावसुना भार्यया मलयवत्या च मलयपर्वतान्निजनिलयं प्रालेयशैलतटमाजगाम । आगत्य तुहिनाद्रिं आविश्य विद्याधरपुरीं आसाद्य विद्याधरसाम्राज्यम् मलयवत्या महेशदयितापादाब्जयोर्भक्तिमत्या वनितया साकञ्चिराय बुभुजे बृन्दारकगणैरपि नन्दनीयं.अकृतसुकृतैरस्पृहणीयमवाङ्मनसगोचरमैहिकसुखम् ।

यत्कीर्तिं पृथिवीतलेऽपि निखिले लब्धप्रतिष्ठां स्वयं
पीयूषानयनापदेशात इतो निन्ये दिवं पक्षिराट् ।
पातालं निजबन्धुदर्शनमिषाच्छ्रीशंखचूडश्च सः
त्रैलोक्यप्रथितश्रवा विजयते जीमूतकेतोस्सुतः ॥

वन्दे सुन्दररूपं नन्दतनूजं नतालिमन्दारम् ।
आनन्दमूलकन्दं बृन्दारकबृन्दवन्दितं सततम् ॥

**इति श्वेतारण्य नारायणशर्मणा रचिते गद्यकाव्ये ख्यातं जीमूतवाहनचरितं समाप्तिमगमत् ।**

---

## लोकोक्तिसंग्रहः ।

१. अनिक्षुयन्त्रके ग्रामे मधुपुष्पं हि शर्करा ॥
२. विरतायामपि वृष्टौ न हि शाखानां पृषन्ति विरतानि ॥
३. सन्दग्धा अपि चिकुरा स्सञ्जायेरन्किमंगाराः ॥
४. हिंगुपात्रमपश्यः किं विप्र भिक्षार्थमागत ॥
५. सर्वं कार्यं तिष्ठतु वृद्धं कारय सांप्रतमंकारूढम् ॥
६. विनायकं प्रकुर्वाणो रचयामास वानरम् ॥
७. विद्वानेव विजानाति विद्वज्जनपरिश्रमं । नहि वन्ध्या विजानाति गुर्वीं प्रसववेदनां ॥
८. स्वयन्तरितुमक्षमः किमु परानसौ तारयेत् ॥
९. ज्येष्ठागमनपर्यन्तममा किं हि विलंबते ॥
१०. गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥
११. प्रणिपातप्रतीकारस्संरंभो हि महात्मनां ॥
१२. हेम्नस्संलक्ष्यते ह्यग्नौ विशुद्धिश्श्यामिकापि वा ॥
१३. किमिव हि मधुराणां मण्डनं नाकृतीनां ॥
१४. क्रोष्टुर्नटनसंपत्तु कर्कटप्राणहानिकृत् ॥
१५. आलयस्थायिमार्जारो देवतायाः बिभेति किम् ॥
१६. क्षीरं सर्पाय दद्याच्चेत्स सर्पो विषमुद्गिरेत् ॥
१७. विनायकालयं मृज्यात् न तत्रोच्चारमाचरेत् ॥
१८. तीक्ष्णत्वापादके वृक्षे तीक्ष्णत्वस्य परीक्षणम् ॥
१९. एकैकशश्शतं किं वा यौगपद्येन किं शतम् ॥
२०. उत्सृज्य नगरं ग्रामे रत्नानां हि परीक्षणं ॥
२१. पतेदाम्रशलाटुः किं मन्त्रे प्रोच्चारिते सति ॥
२२. शुष्के पिचण्डे भुञ्जीत तुरंगोऽपि पलालकं ॥
२३. उभयोरजयोस्स्तन्यं पीतवानयमर्भकः ॥

२४. सत्स्वर्दना फलमदौह्रदमेव सूते ॥
२५. क्षुधितश्चापि शार्दूलो न कुर्यात्तृणभक्षणम् ॥
२६. प्रवाहो नूतनः प्रत्नं प्रवाहञ्चाप्यनाशयत् ॥
२७. स्वसुः पुत्रः स्वपुत्रश्चेत्किमर्थं तपसि श्रमः ॥
२८. अश्वः पादेन खञ्जोऽपि कुलुत्थगिरणे पटुः ॥
२९. पुरश्चूडस्य विप्रस्य शिखा कंपेत कि वृथा ॥
३०. विश्वप्रसिद्धविप्रस्य किं केशब्रह्मसूत्रकम् ॥
३१. द्रष्टुं व्रणं करगतं मुकुरः किमर्थः ॥
३२. अग्निहोत्रस्य च कृषेरपि नास्त्यनुरूपता ।
३३. वटकानान्तु गणनं न रन्ध्राणामुदीरितं ॥
३४. श्रेष्ठा भुक्तिश्च सेवा च भेषजस्य त्र्यहं स्मृता ॥
३५. ज्ञातुं स्वकं पृष्ठदेशं पाटवं नास्ति कस्य चित् ॥
३६. आकण्ठमपि बन्धुत्वे हस्तं वक्षसि मा क्षिप ॥
३७. रासभस्य पुरीषं किं जायते होमसाधनं ॥
३८. मोदके च्छेदमाप्तेऽपि तद्रुचि नैव यास्यति ॥
३९. भाण्डे वक्रत्वमाप्तेऽपि किन्न पच्येत मोदकं ॥
४०. सर्षपे सत्यपि स्वल्पे तत्कटुत्वं न गच्छति ॥
४१. प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरं ॥
४२. गृहीत्वा तण्डुलान् ज्येष्ठभगिनीबन्धुता तु का ॥
४३. विष्णुशाकः पादपणो भरभृत्या त्रिपात्पणा ॥
४४. कूपस्थितस्य भेकस्य का राष्ट्रस्य विचारणा ॥
४५. ग्रामं गते कर्षणयोग्यभद्रे तत्रापि तं कर्षणमेव कारयेत् ॥
४६. नदीप्रवाहे पूर्णेऽपि लीढ्वा पानक्रिया शुनः ॥
४७. पितामही शयीत चेद्गृहस्य रक्षिका भवेत् ॥
४८. ताम्रचूडं ताडयितुं महायष्टिः किमिष्यते ॥
४९. स्थित्वोच्चरेच्चेदाचार्यः धावित्वा शिष्य उच्चरेत् ॥

५०. बालैः कृतायास्तु कृषेः फलं किं गृहमाव्रजेत् ॥
५१. यदि वह्निरिति ब्रूयादास्यं पच्येत किन्तदा ॥
५२. किं वार्षिकान्धकारेऽपि कीशश्शाखां न लक्षयेत् ॥
५३. उष्णोदकस्य सेकेन किं दह्येत निकेतनं ॥
५४. ज्येष्ठार्जितं कनिष्ठस्य कटिसूत्राय नाप्यलं ॥
५५. स्वीयमित्यस्ति चेच्छेकस्तृणानि परितः खनेत् ॥
५६. बध्वा रुदन् शुभे किन्तु तूष्णीं स्यान्मृतवेश्मनि ॥
५७. स्वानार्जितस्य स्वर्णस्य शुद्धिर्नच मितिर्नच ॥
५८. माधुर्यदर्शी मार्जारः प्रतिशिक्यमभिव्रजेत् ॥
५९. विश्वस्याच्चौर्यवन्तं वा वामनन्तु न विश्वसेत् ॥
६०. उत्तराभिमुखसौधनिकेतनाद्दक्षिणाभिमुखपर्णकुटी वरा ॥
६१. अप्यतिक्षुल्लकं सर्पं महादण्डेन ताडय ॥
६२. पिपीलिकानां स्पृष्टयाऽपि शिलाऽप्याघर्षिता भवेत् ॥
६३. नदीमीक्षेत चेद्विप्र उत्कुश्योत्क्रुश्य वै पतेत् ॥
६४. एकाशीतितमालस्यं कोटीभंगाय कल्पते ॥
६५. नोल्लंघयति सीमानं तिल्लकाननकन्यका ॥
६६. पिटकानां सहस्रस्य हन्ता च्छेत्ता भिषक्स्मृतः ॥
६७. कुडपोऽपि न शिष्येत कर्षको गणयेद्यदि ॥
६८. पानक्रिया यवाग्वा तु गण्डूषो हिमनीरतः ॥
६९. मौक्तिकं कन्यकाऽपि स्यात् शुल्कश्चापि भवेल्लघु ॥
७०. उत्पादकस्य कुंभानामनेकान्दिवसान् क्रिया। उद्भेदकस्य कुंभानामेकमेव क्षणं क्रिया ॥
७१. पत्रतुंबी निषिद्धा चेद्गृहतुंब्याः किमागतम् ॥
७२. सिद्धमन्नं परित्यज्य भिक्षामटति दुर्मतिः ॥
७३. हस्तस्थं पायसं त्यक्त्वा कूर्परं लेढि दुर्मतिः ॥
७४. शिलागणेशं चेच्चेत् प्राप्नुयाद्दन्तभञ्जनम् ।

७५. अण्डं प्रसार्य भुञ्जानं पद्मपत्रमयाचत ॥
७६. पश्येश्चेच्चुंबनं स्वप्ने यस्य कस्यापि मा वद ॥
७७. निष्कुटौषधिरगौरवास्पदम् ॥
७८. छिच्छिन्द्यात्किं कण्ठसूत्रं दुःखप्रश्नार्थमागता ।
७९. यत्न भुङ्क्ते गृहे तत्र द्वैतमिष्येत किं स्वयम् ।
८०. केन बन्धयितुं शक्यं कुञ्जरस्यालमल्लकम् ॥
८१. तण्डुलाश्चेद्विकीर्येरन् सहस्रं वायसास्तदा ॥
८२. प्रवेश्य वामनं तोये परिपश्यत्यगाधतां ।
८३. अनिष्टायास्तु भार्यायाः करस्पर्शोऽपि दुष्टता ॥
८४. लेखिनीं कथयेत्खञ्जां अजानन् लेखनं पुमान् ॥
८५. पाकायैवाभवत्कालः कालो नास्त्यौष्ण्यशान्तये ॥
८६. व्याजभूतं हि खञ्जस्य वाजिन स्खलितं स्थलम् ॥
८७. महिष्यां प्रसवार्तायां महिषो मदनातुरः ।
८८. पञ्चवक्त्रे वने दृष्टे किञ्चरेयुः परे मृगाः ॥
८९. भित्तिशाकं मेलयित्वा दुर्धीर्वेश्ये निपातय ॥
९०. दह्यमाने गृहे वह्निं धूमपत्राय पृच्छति ॥
९१. चटकः किं भवेत्कंको डयमानोऽप्युपर्यलम् ॥
९२. आगतावागतौ श्वश्रूरभवद्गर्दभी यथा ।
९३. यावनालसमुत्पन्ना लाजाः कि कुञ्जरक्षुधः ॥
९४. मृत्तिकाघनजामातुर्भक्षणं शुष्कगोशकृत् ॥
९५. प्रतिवादिपदे पातो वरं साक्ष्यंघ्रिपाततः ॥
९६. प्राप्येऽपि कुट्टने श्लाघ्यं कुट्टनं सोर्मिकैः करैः ॥
९७. विश्राणनीयं भिषजे द्रविणं देहि चक्रिणे ॥
९८. भोजने पुरतस्तिष्ठ पश्चात्तिष्ठ निषेवणे ॥
९९. जातस्यापि गिरौ धान्यस्यावघात उलूखले ॥
१००. निरस्तमानवे ग्रामे हयमेधं करोत्ययम् ॥

